# IN MEMORY
OF
# G. A. NATESAN
(FOUNDER, G. A. NATESAN & CO. & INDIAN REVIEW)



BORN 24–8–1873 ] [ DIED 10–1–1949

TRIVANDRUM SANSKRIT SERIES.
No. CXIX.
Śrī Citrodayamañjarī.
No. VIII.

# THE VIVEKAMĀRTĀṆḌA

OF

Visvarūpadeva

EDITED BY
K. SĀMBAŚIVA ŚĀSTRĪ
*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1935.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११९.

श्रीचित्रोदयमञ्जरी ।

ग्रन्थाङ्कः ८.

विश्वरूपदेवविरचितः

# विवेकमार्ताण्डः

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण
के. साम्बशिवशास्त्रिणा
संशोधितः ।

---

स च
अनन्तशयने
महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितः ।

---

कोलम्बाब्दाः ११९०. क्रैस्ताब्दाः १९३५.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवादितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE.

This work is significantly titled Vivekamārtāṇḍa as it explains various methods of acquiring true knowledge as the Sun awakes the world to its consciousness. There are six Prabodhas in this work, of which the first deals with the necessity of arriving at true knowledge as is proposed to be expounded in the laudatory stanzas of the poets; the second with the removal of illusion by means of descrimination; the third, with the destruction of volition and vacillation, the root cause of ever expanding worldly life, by means of true knowledge; the fourth, with the knowledge of time and deception thereof with discernment; the fifth, with the awakening of the true nature of soul consequent on the removal of illusion; and the sixth, with the final emancipation of soul resulting from the observance of Yogic practice. The learned author himself has named the work as Vivekamārtāṇḍa as is evident from the following verses:—

"विवेकमार्तण्डगिरेरशेषं
यदा महामोहतमो विनष्टम् ।
तदैव हस्तामलकप्रमाणं
विराजते विश्वमिदं समस्तम् ॥"

(P. 3. Śloka 20).

"दृष्ट्वा विवेकमार्तण्डमुत्कटानन्दमण्डलम् ।
तद् विन्दति पदं योगी यदप्राप्यं सुरासुरैः ॥"

(P. 6. Śloka 48).

"कृतं मया चित्तविनोदनार्थं
विमोक्षशास्त्रं च मुदे गुरूणाम् ।
विवेकसम्पत्तिकरं नराणां
विवेकमार्तण्डमतो वदन्ति ॥" (P. 77).

From the concluding stanza,

"अजानता यत् किल योगमार्गं
ग्रन्थो मयाकारि नवप्रबोधः ।
विवेकभानुः स मतो नराणां
क्षन्तव्यमेतत् कविभिः समस्तम् ॥" (P. 77).

it is evident that he was also aware of the chapters being named as "Prabodhas."

*The Author*. From the manner of treatment and the gravity of subjects dealt with in this work, the author appears to be a great teacher well-versed in various branches of knowledge. It has not been possible for me to learn anything about the date and other particulars of his life. From the closing stanza, however of the work,

"श्रीमत्पराशरकुले महति प्रसूतो
योऽयं कृती शतगुणो गुणिनां वरिष्ठः ।
तस्यात्मजोऽकृत रजन्धिपुराधिवासो
ग्रन्थं शुभाय भविनां भुवि विश्वरूपः ॥" (P. 76).

it is seen that his name was Viśvarūpa, that he belonged to the family of Parāśara, that his father was Śataguṇācārya of great repute and that he resided in Rajandhipura. From the word 'deva' affixed to the name Viśvarūpa in the colophon found at the close of each chapter, "इति शतगुणाचार्यतनय-श्रीविश्वरूपदेवविरचिते विवेकमार्तण्डे .............. प्रबोधः ॥" it can also be inferred that he belonged to a royal family. It is not known where this Rajandhipura is at present located and what modern name it bears. My friend, the Superintendent of the Bhandarkar Oriental Research Institute, Poona, who was addressed on the subject wrote to me as follows :— "Rajandhipura mentioned in the verse from the colophon of Vivekamārtāṇda as quoted by you appears to be phonetically nearer to Radhanpur, the cheif town of the Radhanpur State of the Bombay Presidency". If this surmise is correct, the author may be said to have flourished some 1000 years ago. The names of ancient cities were used without corruption before the invasion of the Muhammadans; and it was not till about the 10th century A. D., that Bombay and other northern countries were subject to their onslaught. Besides, the work has an archaic simplicity pointing to a very old date of the author. I think Bhartṛhari and other great poets are indebted to the author, as the following Śloka of Viśvarūpa,

"आयुर्वर्षशतं तावत् तदर्धं निद्रया गतम् ।
अर्धार्धं मुग्धभावेन गतं शेषं जरादिभिः ॥"

(P. 8. Śloka 13).

is found enlarged by Bhartṛhari in his Subhāṣita thus:—

"आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।"

(III. Śloka 49).

It cannot be said that the author borrowed from Bhartṛhari; for the latter has evidently a modern look in common with the Kāvya literature. Even the Adhyātmarāmāyaṇa, the authorship of which has not yet been definitely known, is found to have borrowed from the present work. Compare,

"दन्तशूकगलग्रस्तदर्दुरस्य स्थितिर्यथा ।"

(Viveka p. 9. Śloka 18.)

with

"यथा व्यालगलस्थोऽपि भेको भोगानपेक्षते ।"

(Adhyātma Āraṇyakāṇḍa)

Taking all these facts into consideration, I think that Viśvarūpa connot be placed later than 7th century A. D.

The edition of this work is based on three palmleaf manuscripts. The first is an incomplete copy belonging to the library of Edapalli Valia Raja. The second is also an incomplete one obtained from the library of Brahmaśri Muthu Śāstrial, Kanyakumāri. The third is a complete copy obtained from the library of Brahmaśri Kudallur Brahmadattan Nambarippad. All the manuscripts are about 200 years old and are preserved in good condition and our hearty thanks are due to the owners of the manuscripts. Hoping that the custodians of the manuscripts will be helping us more and more, we place this work before the learned public.

Trivandrum, 14-4-1111.

K. SĀMBAŚIVA ŚĀSTRĪ.

"अजानता यत् किल शास्त्रमार्गं
ग्रन्थो मयाकारि *नवप्रबोधः ।
विवेकभानुः स मतो नराणां
क्षन्तव्यमेतत् कविभिः समस्तम् ॥"

इत्युपसंहारकारिकया ग्रन्थघटकानां प्रकरणानां प्रबोध इति नामकरणमभिमतं प्रतीयते । बहुज्ञोऽयं परमाचार्यः प्रथितो ग्रन्थकार इति प्रतिपादनसरण्या प्रतिपादितवस्तुतत्त्वप्रक्रियया चावगम्यते । जीवितसमयमन्यदन्यच्चादर्सीयं चरितमवगन्तुं न सन्ति विवृताः पन्थानः । ग्रन्थान्ते —

ग्रन्थकारः ।

"श्रीमत्पराशरकुले महति प्रसूतो
योऽयं कृती शतगुणो गुणिनां वरिष्ठः ।
तस्यात्मजोऽकृत रजन्धिपुराधिवासो
ग्रन्थं शुभाय भविनां भुवि विश्वरूपः ॥"

इति दर्शनाद् विवेकमार्तण्डकर्तासौ पराशरवंशीयः सुप्रसिद्धशतगुणाचार्यतनयो रजन्धिपुराधिवासः कश्चन विश्वरूपनामेति विज्ञायते

मातृकायां तत्तत्प्रबोधपरिसमाप्तिवाक्ये —

"इति शतगुणाचार्यतनयश्रीविश्वरूपदेवविरचिते विवेकमार्तण्डे योगसाधनं नाम षष्ठः प्रबोधः ॥"

इत्यादौ देवोपपददर्शनात् स्यात; सम्भवेदयं विश्वरूपः कश्चिद् राजवंश्यः । रजन्धिपुरं च समुद्धृतपद्यघटकमद्यत्वे किन्नामकमिति निर्धार्य निरूपयितुं नास्ति प्रबलोपपत्तिः । अस्मत्सुहृदपि च पुण्यपुरीयप्राच्यग्रन्थालयाध्यक्षो विषयममुं परिशुद्धः स्पष्टमेवमाचष्टे —

" Rajandhipura mentioned in the verse from the colophon of Vivekamartanda as quoted by you appears to be phonetically nearer to Radhanpur, the chief town of the Radhanpur State of the Bombay Presidency."

* नवप्रबोधशब्दे नवशब्दो न सङ्ख्यापरः । षष्ठप्रबोधपरिसमाप्तौ
"सकृदपि पठतीमं यः शृणोति प्रबन्धं
स भवति भुवि भव्यो भाजनं भुक्तिमुक्त्योः ॥"
इति फलश्रुतेः ।

यद्ययमभ्यूहो बलवानुपपत्तिसनाथः, काममसौ विश्वरूपदेवः सहस्र-संवत्सर्याः प्राक्तनः सम्भाव्यते । प्राचीनानां हि संज्ञाव्यवहाराणामासीत् स स समयो यो यो महम्मदीयाक्रमणात् पूर्वतनः । बाम्बेप्रभृतिषूत्तरभारतेषु च तदाक्रमणं क्रिस्त्वब्दीयसप्तमशतकसन्निहितं प्रथते । किञ्चार्षच्छायाप्यद-सीयशय्यायाः प्राञ्चममुं विवृणोति । मन्ये भर्तृहरिप्रभृतयो महाकवयोऽप्यस्य छायायां विश्राम्यन्ति । यद् —

"आयुर्वर्षशतं तावत् तदर्धं निद्रया गतम् ।
अर्धार्धं मुग्धभावेन गतं शेषं जरादिभिः ॥"

(विवेक० पृ० ८ श्लो० १२)

"आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।"

(भर्तृहरि० वै० श० श्लो० ४९)

नच शक्यं विनिगमनाविरहादुपजीव्यत्वं सुभाषितस्येति शङ्कितुं, तत्रार्वाचीन-तास्फोरकसाहित्यगन्धस्यानिवार्यत्वात् । किमधिकेन, अद्ययावदनिश्चितकर्तृके-ऽध्यात्मरामायणेऽप्यस्योपजीव्यभावः शङ्कास्पदं लगति । यत्किल —

"दन्दशूकगलग्रस्तदर्दुरस्य स्थितिर्यथा ।"

(विवेक० पृ० ९. श्लो० १८)

"यथा व्यालगलस्थोऽपि भेको भोगानपेक्षते ।"

(अध्यात्मरामा० आरण्यकाण्डम्.)

इति । सर्वथा क्रिस्त्वब्दीयसप्तमशतकादनर्वाचीनोऽयं विश्वरूपदेव इति सि-ध्यति ।

अस्य विवेकमार्ताण्डस्य प्रकाशावलम्बभूता मातृकास्तिस्रः । आद्ये प्रथमे असमग्रे यथाक्रमम् इटप्पळ्ळिवलियराजग्रन्थशालायाः, कन्याकु-मारीब्रह्मश्रीमुत्तुशास्त्रिग्रन्थशालायाश्च स्वे । तृतीया च समग्रा कूटल्लूर् ब्रह्मश्रीब्रह्मदत्तनम्पूतिरिग्रन्थशालीया । तिस्रोऽप्यमूरब्दद्विशतीपर्युषिता

उपयोगक्षमा इति बाढममी स्वामिनो मातृकाणामस्मत्कृतज्ञतावचनस्यार्हन्ति । तदिदमेतादृशं साहायकं तत्तेषां ग्रन्थस्वामिनामक्षय्यमभिवर्धतामिति प्रार्थयन्नमुं मार्ताण्डं प्रकाशनायोपस्थापयामि सतां समक्षम् ॥

अनन्तशयनम्,
१४-४-१९१[illegible].

के. साम्बशिवशास्त्री.

# विषयानुक्रमणी ।

॥ श्रीः ॥

# विवेकमार्तण्डः ।

## शतगुणाचार्यतनयविश्वरूपदेवविरचितः ।

---

### प्रथमः प्रबोधः ।

व्याप्तं जगत्त्रयं येन बहिरन्तर[1]विद्यया ।
योगगम्यं तमात्मानं वन्दे दुःखहरं परम् ॥ १ ॥

हा मित्रं मम हा कलत्रमुचितं हा मे गृहं हा धनं
हा पुत्रो मम हा पिता मम गुरुक्षेत्रादिकं हा मम ।
इत्थं हा ममका[2]रबद्धमखिलं विश्वं सदेवासुरं
यन्मायार्णवमग्नमस्ति सततं तस्मै नमो विष्णवे ॥

याका[3]पि प्रकृतिः पुरा गुणमयी माया महामोहिनी
कामक्रोधविबोधलोभजननी बीजं जगज्जन्मनः ।
क्षुब्धं मुग्धमिदं निबद्धमतु[4]लं द्वन्द्वं समस्तं यया
वन्देऽहं भवभावभूरिविभवभ्रंशाय कामेश्वरीम् ॥

अपनयति जनानां जाड्यमुग्रं समस्तं
जनयति परमार्थज्ञानमानन्दितां च ।
[6]रभसममृतकुण्डोद्घाटने या समर्था
जगति जयति वाणी सत्कवीनां वरा सा ॥ ४ ॥

---

१. 'मायया', २. 'तानुब', ३. 'चित्' ख. पाठः. ४. 'लद्वन्द्वैः स' क. पाठः. ५. 'मभ्रान्ततां' ख. पाठः. ६. 'ह्रादिमदमृ' क. पाठः.

G P. T 2320. 500. 25-9-1110. B

सुबेद्धापि विमोक्षाय[२] सगुणा(य? पि) गुणच्छिदे ।
यद् भवेत् भारती लोके तच्चित्रमतुलं कवेः ॥ ५ ॥

आनन्दपितरो विश्वजीवितं भुवि सज्जनाः
देवदानवसिद्धानां सत्कवीनामहर्न्निशम् ॥ ६ ॥

स्वर्गं गता यद्यपि दिव्यरूपा
न मृत्युभाजः कवयो वदन्ति ।
यद्वाक्यमन्त्रैर्भवभोगिदंष्टा-[३]
नुत्थापयन्ते पतितान् मनुष्यान् ॥ ७ ॥

धन्यास्त एव कवयो ये मोहनिशाक्षयं समासाद्य ।
हृदये विरागभरिते पश्यन्त्युदितं विवेकार्कम् ॥ ८ ॥

मददावानलदग्धे नरगिरिनिकरे विवेकजलदो यः ।
विदितः स एव सुकविः स्यात् प्रेतकमारका ह्यन्ये ॥ ९ ॥

यद् गुणत्रयबद्धानां नराणां बन्धकारणम् ।
तत् कार्यं कः कृती कुर्यात् सततं प्रेतमारणम् ॥ १० ॥

बध्नाति सद्गिरामोघं यस्तु मोक्षाय देहिनाम् ।
उत्पादयति पीयूषं मृतानां जीवनाय सः ॥ ११ ॥

दन्तहीनो यथा बालो हृष्टो वक्तुमपेक्षते ।
योगिनां वल्लभं शास्त्रं कर्तुमिच्छाम्यहं तथा ॥ १२ ॥

सद्गुणैः सरसैर्वृत्तैर्मुक्तकैर्मौक्तिकैरिव ।
ग्रथनं तत् करिष्यामि यन्मुक्ताकण्ठभूषणम् ॥ १३ ॥

१. 'बु', २. 'न' क. पाठः. ३. 'वक्रादुत्था' ख. पाठः.

यानि वस्तूनि संसारे निगळा इव देहिनाम् ।
तानीह दूषयिष्यामि क्षन्तव्यं तन्मनीषिभिः ॥ १४ ॥

रे दुर्वारविषादविभ्रमरते! रे शोकतृष्णे! प्रिये!
रेऽहङ्कार! समारमत्सरमदा! रे लोभदम्भादयः!।
त्यक्त्वा योगिनमेव मूढहृदयं दुर्गं प्रयाताधुना
नो चेन्नाशमुपागता हि यमिनां जातो विवेकोदयः
[ ॥ १५ ॥

चित्तोदयगिरिं प्राप्ते सद्विवेकदिवाकरे ।
सुप्रभातमभूदद्य मोहरात्रिः क्षयं गता ॥ १६ ॥

परमार्थमपाहृत्य महामोहनिशागमे ।
उद्वेजयन्ति चेतांसि नृणामिन्द्रियतस्कराः ॥ १७ ॥

कालकूटसमो मोहो विवेकोऽमृतसन्निभः ।
एकः करोति देवत्वं प्रेतत्वमितरो नृणाम् ॥ १८ ॥

विरागयुक्तं विपुलं विशुद्धं
विवेकभानोरुदयं विलोक्य ।
(भु ? भ)जत्यलं सज्जनषट्पदाली
विकासितान्युक्तिसरोरुहाणि ॥ १९ ॥

विवेकमार्ताण्डगिरेरशेषं
यदा महामोहतमो विनष्टम् ।
तदैव हस्तामलकप्रमाणं
विराजते विश्वमिदं समस्तम् ॥ २० ॥

विवेकाख्यं महारत्नं हृदये यस्य तिष्ठति ।
किमस्ति तस्य धीरस्य दुर्लभं भुवनत्रये ॥ २१ ॥

परं भवति तिर्यक्त्वं न विवेकस्य खण्डनम् ।
विवेकाद्धि दिवं प्राप्तं कपोतयुगलं पुरा ॥ २२ ॥

अन्तरं न विवेकस्य पशुत्वं परमस्तु वा ।
धेनुर्विवेकिनी स्वर्गं जगाम कपिला पुरा ॥ २३ ॥

हृत्तापशमनीं पुंसां विवेकाख्यां महौषधीम् ।
गृ(ह्य ? ह्ल)तां सद्भिरानीतां वेदभूधरकन्दरात् ॥ २४ ॥

विमोहपटलान्धानां महाहृदयचक्षुषाम् ।
विवेको भेषजं दिव्यं दातव्यं देहिनामिति ॥ २५ ॥

चराचराद्भिभावानामौषधीनां तु सर्वतः ।
रसो वीर्यं विपाकश्च विवेकादेव लक्ष्यते ॥ २६ ॥

मणिमन्त्रौषधीनां तु योगानां विविधाः क्रियाः ।
योगिभिः सर्वमित्यादि विवेकादेव लक्ष्यते ॥ २७ ॥

काष्ठे वह्निस्थिते तैलं जले मौक्तिकसम्भवः ।
पाषाण लाहामत्यादि विवेकादव लक्ष्यत ॥ २८ ॥

आकृष्टिः करणं प्रोक्ता भ्रमणं भ्रामके तथा ।
लोहस्य द्रावके द्रावो विवेकादेव लक्ष्यते ॥ २९ ॥

अविवेकात्तु मानुष्यात् क्रमितास्तु विवेकिनि ।
देही विचारयोगेन स्वयं सिद्धिमवाप्नुयात् ॥ ३० ॥

काष्ठिकद्वारजन्या या पुण्यमायाति पूर्वजम् ।
जलदत्तं समादाय गता स्वर्गं विवेकिनी ॥ ३१ ॥

सारात् सारं समालोक्य गृहगोधा विवेकिनी ।

१. 'किनि मा' ख. पाठः.

सम्प्रार्थ्य तमिदं शम्भुं या गता परमं पदम् ॥ ३२ ॥
पिब कर्णाञ्जलिं कृत्वा सद्विदकरसायनम् ।
येनामरपदप्राप्तिरचिरात् तव जायते ॥ ३३ ॥
यत् पुण्यं जीवघातेन यत् पुण्यं जीवरक्षणात् ।
सखे! महाहवादौ[1] तु विवेकात् तद्धि लक्ष्यते ॥ ३४ ॥
क्वचित् सत्ये महत् पापं क्वचित् पुण्यं तथानृते ।
सर्वदा[2] सत्यमित्यादि विवेकादेव लक्ष्यते ॥ ३५ ॥
द्विजवृन्दं पदा येन याति सत्यं वद प्रभो! ।
इति पृच्छति जीवघ्नो विवेकी धर्मेणाचरेत् ॥ ३६ ॥
अविवेकी नरो नैव धर्मकामार्थमोक्षभाक् ।
अतः श्रुत्यादिसम्बन्धाद् भवितव्यं विवेकिना ॥ ३७ ॥

अर्धः शशाङ्कोऽपि हि याति वृद्धिं
तमःक्षये लब्धकलान्तरोऽत्र ।
अर्धस्य चन्द्रस्य बलं न येषां
मूढा नरास्ते विपदं प्रयान्ति ॥ ३८ ॥

लुब्धकं लब्धलक्षं तु प्रमार्जितगुणं हठात् ।
अविवेकिनमालोक्य मृगीव श्रीः पलायते ॥ ३९ ॥
नोचितज्ञो यदि स्त्रीणां मदनोऽपि न वर्धते ।
सुरतानन्दसंलब्धपुलकं कामिनीसुखम् ॥ ४० ॥
विख्यातं शिवनिर्माल्यमस्थिमद् भस्मसङ्कुलम् ।
कुशलं[3] जाह्नवीतोयं मन्यन्ते ह्यविवेकिनः ॥ ४१ ॥

---

१. 'दाहुः वि' क. पाठः. २. 'था', ३. 'वत्' ख. पाठः.

कुरुते नहि कर्माणि शिखासूत्रं न धारयेत् ।
इति कृत्वा सदा मूढो यतिः शूद्रवदाचरेत् ॥ ४२ ॥

विवेकात् प्राप्यते लक्ष्मीर्विवेकात् कामितं सुखम् ।
विवेकात् साध्यते [illegible] विवेकान्मुक्तिराप्यते ॥ ४३ ॥

न जातौ [illegible] हि विवेकिनः ।
ऋश्यशृङ्गो [illegible]मुखो [illegible]रपि नमस्यते ॥ ४४ ॥

न प्रधानं धनं वीर्यं न [illegible]नुष्यं सुरूपता ।
सुरैरपि नमस्यन्ते मुनयो हि विवेकिनः ॥ ४५ ॥

यदप्राप्यं खगेन्द्रेण दिव्यं वर्षशतैरपि ।
तद् विवेकेन सम्प्राप्य याति पङ्गुः परं पदम् ॥ ४६ ॥

दृश्यते न समर्थेन सहस्राक्षेण यत् फलम् ।
तद् विवेकस्य [illegible]ः पश्यन्ति लोक[illegible] ॥ ४७ ॥

दृष्ट्वा विवेकमार्तण्ड[illegible]टानन्दमण्डलम् ।
तद् विन्दति [illegible] योगी यदप्राप्यं सुरासुरैः ॥ ४८ ॥

सत्यं शौचमहिंसता च समता सद्ब्रह्मचर्यं तपः
शान्तिक्षान्तिकृपा[illegible]तिः श्रद्धा तथा द्वादशी ।
एतत् पुण्यकलाकलापसहितं प्रज्ञारथस्थं सदा
ये पश्यन्ति विवेक[illegible]दितं तेषां न मोहान्धता
[॥ ४९ ॥

इति शतगुणा[illegible]रचिते विवेकमार्तण्डे
[illegible]

१. 'मुह्यन्ते' ख. पा०.

अथ द्वितीयः प्रबोधः ।

एतदेव परं सौख्यमेतदेव परं सुखम् ।
श्रुतिसज्जनसङ्गत्या यद् भवेन्मोहनिग्रहः ॥ १ ॥
एतदेव परं ज्ञानमेतदेव परं महत् ।
नृणां विवेकसम्भाव्या यद् भवेन्मोहनिग्रहः ॥ २ ॥

विवेकभानोरुदये विशुद्धे
परं पदं योगिन आगजाग्नि ।
विभोगशय्यामधिरुह्य मोहात्
सखे! किमद्यापि सुखं न बोधसि ॥ ३ ॥

मोहाम्बुपूर्णे भवसागरेऽस्मि-
न्नाराति घोरं किल कर्मजालम् ।
आकृष्य कालोऽपि हि धीवरोऽयं
चतुर्विधं भूतगणं निहन्ति ॥ ४ ॥

हा हा कष्टमिदं दष्टं कालसर्पेण दर्पिणा ।
पुनरेति मृतावस्थां पुनः प्राप्नोति जीवितम् ॥ ५ ॥
देवदानवगन्धर्वयक्षराक्षससङ्कुलम् ।
जनं कालभुजङ्गोऽयं ग्रसतीति न बुध्यते ॥ ६ ॥
यद्यपि प्रत्यहं लोकः कालघातेन मूर्छितः
तथापि निद्रितोऽस्मीति मन्यते न तु बुध्यते ॥ ७ ॥
प्रत्यक्षमिति किं लोकः पश्यन्नपि न पश्यति ।
ग्रसतीदं जगत् कालो बकः शफरिकामिव ॥ ८ ॥

---

१. 'पुरं' क. पाठः.

सुखगर्भस्थितं दुःखं दुःखगर्भस्थितं सुखम् ।
द्वयमन्योन्यसंयुक्तं प्रोच्यते जलपङ्कवत् ॥ २८ ॥

सुखाभावे तु यद् दुःखं दुःखाभावे तु यत् सुखम् ।
द्वयमेतद्धि जन्तूनामलभ्यं दिनरात्रिकम् ॥ २९ ॥

यदद्वयमहानन्दविह्वलत्वमखण्डितम् ।
तत् सुखं सद्भिराख्यातं न तु व्यापारसम्भवम् ॥ ३० ॥

सुखं वैषयिकं चापि बाहिस्सारं तु चञ्चलम् ।
दुःखगर्भितमालोक्य कूटद्रव्यमिव त्यजेत् ॥ ३१ ॥

स्वादुस्वाद्यं निमेषार्धं तालुजिह्वाग्रसङ्गतम् ।
पुनः सर्वं हि सामान्यं कुभुक्तं किन्न रोचते ॥ ३२ ॥

सदन्नमपि यद् भुक्तं कदन्नमपि वा भृशम् ।
द्वयोरमेध्यनिष्पत्तिः कथमेकं न रोचते ॥ ३३ ॥

भुक्तं भक्तं कदशनमपि किं
जीर्णं वासः सुवसनमपि किम् ।
सा चेन्निद्रा कुशयनमपि किं
दुःखं नृणां मनसिजमखिलम् ॥ ३४ ॥

भिक्षाशी वा निजगृहभोजी
स्त्रीयुक्तो वा भवतु वियोगी ।
एकाकी वा करिनरयुक्तः
सन्तोषी यः स तु भुवि मुक्तः ॥ ३५ ॥

१. 'मकुटः ॥' ख. पाठः.

एका क्षमा भवतु किं बहुभिः समुद्रै-
रेका मतिर्भवतु किं बहुभूषणैश्च ।
एका धृतिर्भवतु वा बहुभिर्विभोगै-[1]
रेकं स्फुटं भवतु किं बहुभिर्विवादैः ॥ ३६ ॥

फलं यत्राश्वमेधानां देहत्यागं विना यशः ।
तत्सत्यममृतं त्यक्त्वा हाहा लोकोऽनृतं वदेत् ॥ ३७ ॥

असत्यं पापमालोक्य मेरुमन्दरसन्निभम् ।
अन्धा वियोगसंतप्ताः पशवो हि यतो गताः ॥ ३८ ॥

भूरम्बु दहनो वायुरिन्दुभानुपुरोगमाः ।
यत्रैते साक्षिणो नित्यं तत्र दम्भो निरर्थकः ॥ ३९ ॥

पञ्चाशद्वर्णभेदेन वाङ्मयं ब्रह्म यत्कृतम् ।
तत्परं हि न जानाति वृथा पाण्डित्यविभ्रमः ॥ ४० ॥

छन्दो व्याकरणं निघण्टु गणितं तर्कागमौ ज्योतिषं
शीक्षासूक्तनिरुक्तवैदिकमलङ्कारस्तथा नाटकम् ।
निर्वाणाय नृणां न किञ्चिदनिशं यद्यप्यधीतं स्फुटं
सर्वं चैकविवेकदीपरहितं पालालभारायते ॥ ४१ ॥

धर्मे मतिः किं बहुभिः सुशास्त्रै-
र्जीवे दया किं बहुभिर्व्रतौघैः ।
लोभक्षयः किं बहुभिस्तु यज्ञैः
शान्तं मनः किं बहुभिस्तपोभिः ॥ ४२ ॥

---

१. 'भा' क. पाठः.

सुखगर्भस्थितं दुःखं दुःखगर्भस्थितं सुखम् ।
द्वयमन्योन्यसंयुक्तं प्रोच्यते जलपङ्कवत् ॥ २८ ॥

सुखाभावे तु यद् दुःखं दुःखाभावे तु यत् सुखम् ।
द्वयमेतद्धि जन्तूनामलभ्यं दिनरात्रिकम् ॥ २९ ॥

यदद्वयमहानन्दविह्वलत्वमखण्डितम् ।
तत् सुखं सद्भिराख्यातं न तु व्यापारसम्भवम् ॥ ३० ॥

सुखं वैषयिकं चापि बाहिस्सारं तु चञ्चलम् ।
दुःखगर्भितमालोक्य कूटद्रव्यमिव त्यजेत् ॥ ३१ ॥

स्वादुस्वाद्यं निमेषार्धं तालुजिह्वाग्रसङ्गतम् ।
पुनः सर्वं हि सामान्यं कुभुक्तं किन्न रोचते ॥ ३२ ॥

सदन्नमपि यद् भुक्तं कदन्नमपि वा भृशम् ।
द्वयोरमेध्यनिष्पत्तिः कथमेकं न रोचते ॥ ३३ ॥

भुक्तं भक्तं कदशनमपि किं
जीर्णं वासः सुवसनमपि किम् ।
सा चेन्निद्रा कुशयनमपि किं
दुःखं नृणां मनसिजमखिलम् ॥ ३४ ॥

भिक्षाशी वा निजगृहभोजी
स्त्रीयुक्तो वा भवतु वियोगी ।
एकाकी वा करिनरयुक्तः
सन्तोषी यः स तु भुवि मुक्तः ॥ ३५ ॥

---

१. 'मक्कुटः ॥' ख० पाठः.

एका क्षमा भवतु किं बहुभिः समुद्रै-
रेका मतिर्भवतु किं बहुभूषणैश्च ।
एका धृतिर्भवतु वा बहुभिर्विभोगै-[1]
रेकं स्फुटं भवतु किं बहुभिर्विवादैः ॥ ३६ ॥

फलं यत्राश्वमेधानां देहत्यागं विना यशः ।
तत्सत्यममृतं त्यक्त्वा हाहा लोकोऽनृतं वदेत् ॥ ३७ ॥

असत्यं पापमालोक्य मेरुमन्दरसन्निभम् ।
अन्धा वियोगसंतप्ताः पशवो हि यतो गताः ॥ ३८ ॥

भूरम्बु दहनो वायुरिन्दुभानुपुरोगमाः ।
यत्रैते साक्षिणो नित्यं तत्र दम्भो निरर्थकः ॥ ३९ ॥

पञ्चाशद्वर्णभेदेन वाङ्मयं ब्रह्म यत्कृतम् ।
तत्परं हि न जानाति वृथा पाण्डित्यविभ्रमः ॥ ४० ॥

छन्दो व्याकरणं निघण्टु गणितं तर्कागमौ ज्योतिषं
शीक्षासूक्तनिरुक्तवैदिकमलङ्कारस्तथा नाटकम् ।
निर्वाणाय नृणां न किञ्चिदनिशं यद्यप्यधीतं स्फुटं
सर्वं चैकविवेकदीपरहितं पालालभारायते ॥ ४१ ॥

धर्मे मतिः किं बहुभिः सुशास्त्रै-
र्जीवे दया किं बहुभिर्व्रतौघैः ।
लोभक्षयः किं बहुभिस्तु यज्ञैः
शान्तं मनः किं बहुभिस्तपोभिः ॥ ४२ ॥

---

१. 'भा' क. पाठः.

रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम् ।
ता[१]वुभौ यदि न स्यातां तपसा किं प्रयोजनम् ॥ ४३ ॥
तपो वर्षसहस्रे तु यदुपार्जितमव्ययम् ।
तत् क्षणं दहति क्रोधो दवाग्निरिव पर्वतम् ॥ ४४ ॥
जल्पकं पात्रसम्पातैः सहायैः प्रकटीभवेत् ।
ग्रहोऽयं मानसः कोऽपि बद्धो येन समस्तै[२]वित् ॥ ४५ ॥
क्रोधा[३]भिमलिनं चित्तं नहि शुध्यति वारिणा ।
अमेध्यभरितं कुम्भं बहिश्शौचेन किं भवेत् ॥ ४६ ॥
अन्तः स्पृशति चण्डालो बहिः स्नानेन किं भवेत् ।
सद्वारिणा विनिर्मूढा मधुना नैव तुम्बकैः[४] ॥ ४७ ॥
न क्रोधेन समो वैरी स्नेहतुल्यं न बन्धनम् ।
न सन्तोषसमं सौख्यं न दानेन समो निधिः ॥ ४८ ॥

अमृतसिन्धुरलं मथितोऽपि सन्
हृतधनो हरिणा पुनरर्थितः ।
शयनमस्य ददौ जठरे मुदा
न खलु वैरमहो महतां चिरम् ॥ ४९ ॥

उपशमो हृदि यस्य स देहिना-
मिह सुखी च कृती स हि वन्द्यते ।
अपि कलङ्कयुतस्तु निशाकरो
भवति वल्लभ एव हि चन्द्रमाः ॥ ५० ॥

---

१. 'वेश्य', २. 'न्त्र', ३. 'दि' क. पाठः. ४. 'तः' ख. पाठः.

अपि ददातु निरागसि कालिका
खलु भविष्यति संसदि कालिमा ।
प्रतिवचो हि न चास्य विधीयता-
मुपशमो महतां[1] स विभूषणम् ॥ ५१ ॥

मा मूढ दुस्सहागालिदेहयोगेन तद्विधिः ।
अपि स्तोकं तु यद् दानं सत्पात्रे ह्यतुलीभवेत् ॥ ५२ ॥

यत् फलं पात्रसम्पत्त्या लभ्यते तत् किमन्यथा ।
विषं स्याद्[2] बिम्बसर्पास्ये माणिक्यं शुक्तिसम्पुटे ॥ ५३ ॥

प्रियमेव प्रदातव्यं नाप्रियं प्रियमिच्छता ।
अवश्यमेव भोक्तव्यं कृतदानफलं भुवि ॥ ५४ ॥

प्रयातु गगनादूर्ध्वमधो[3] वापि रसातलात् ।
आधावतु नरः पृथ्वीं नादत्तमुप[4]तिष्ठते ॥ ५५ ॥

उत्पत्तौ च विपत्तौ च मलधारी दिगम्बरः ।
किमन्यन्मलिनाङ्गेन वस्त्र[5]दण्डेन लज्जसे ॥ ५६ ॥

उत्पत्तौ च विपत्तौ च नानुगच्छन्ति कश्चन ।
भूमिर्भार्या धनं चापि नृणां लोभो निरर्थकः ॥ ५७ ॥

धीरो विद्वान् को न नीचत्वमुच्चै-
रापत्कालं प्राप्य याति प्रयोगात् ।
क्षीणो धत्ते वस्त्रतन्तोरपेक्षां
सोमोऽस्माकं ब्राह्मणानां तु राजा ॥ ५८ ॥

---

१. 'ता सुविभूषितम् ।', २. 'स्यात् पिब स', ३. 'मश्चापि', ४. 'भुज्य' ख. पाठः. ५. 'खं बद्धेन' क. पाठः.

आशासिन्धुरगाधोऽयं मनोरथजलाकुलः ।
लोभग्रहो मदावर्तो दुस्तरो विदुषामपि ॥ ५९ ॥

आशाबद्धमिदं विश्वं यतः स्थावरजङ्गमम ।
स्वयमाशापरित्यागान्मुक्ता यान्ति परां गतिम् ॥ ६० ॥

दशना वदनभ्रष्टाः शिरोभ्रष्टाः शिरोरुहाः ।
अस्थीनि चर्मभ्रष्टानि जन्तोस्तृष्णा न दृश्यते ॥ ६१ ॥

तृष्णया बाधितं विश्वं न तृष्णा तेन बाध्यते ।
ईश्वरं कुरुते भिक्षुं श्रीपतिर्याचते बलिम् ॥ ६२ ॥

अस्मद्भूरिति यैरुक्तं तेऽद्यापि क्षितिदानवाः ।
विप्रभूरिति यैरुक्तं तेऽद्यापि क्षितिदा नवाः ॥ ६३ ॥

कथमन्योन्यमुन्मत्ता भूपा निघ्नन्ति संयुगे ।
रामाद्योऽपि जनो नातो न कस्यापि हि मेदिनी ॥ ६४ ॥

गर्जद्गम्भीरनीरां करिनरनिकरस्यन्दनावर्तभीमा-
मुन्मीलत्खड्गनक्रां शरनिकरतरङ्गोच्चलच्छत्रफेनाम् ।
हा तृष्णाकृष्टचित्ता द्रविणकणधियो हल्लकल्लोलमाला-
मामज्जद्वंशशालीमिह समरनदीमाविशन्ति क्षिती-
[न्द्राः ॥ ६५ ॥

आशुष्ककण्ठो व्यसनाय तोयं
ज्वरी यथा वाञ्छति शीतलं च ।
दारानपत्यानि धनानि तद्वत्
तृष्णातुरो ध्यायति बन्धनाय ॥ ६६ ॥

न प्राप्नोति यथा नीडं पक्षी पञ्जरयन्त्रितः ।
तथा तृष्णावृतं चेतो नहि तत्त्वं प्रविन्दति ॥ ६७ ॥

किमसौ सततं देही तृष्णया परितप्यते ।
विवेकामृतसम्पूर्णाः सरितः सन्ति सज्जनाः ॥ ६८ ॥

प्र(हर ? वह)न्ति न वा नद्यो यत्र विद्वन्मुखोद्भवाः ।
विवेकाख्येन तोयेन तत्र तृष्णा भयङ्करा ॥ ६९ ॥

अन्योन्यं मत्सरग्रस्ताः प्रभुदण्डेन ताडिताः ।
यन्त्रिताः स्नेहबन्धेन धिगन्धाः पशवो जनाः ॥ ७० ॥

स्नेहस्यातिशयः पुंसां प्रकोपाय न शान्तये ।
सम्प्राप्य न खलु स्नेहं क्षीयते मानसो ज्वरः ॥ ७१ ॥

तावद् बान्धवबन्धुवर्गगणना तावत् प्रियाः सज्जना-
स्तावन्मातृकलत्रपुत्रपितरोऽन्योन्यं हितं कुर्वते ।
यावत् क्रूरकृतान्तकिङ्करकृतैराकृष्यते नो हठाद्
देही तैरपि दह्यते पुनरतिस्नेहप्रपञ्चो मुधा ॥ ७२ ॥

देहस्थैर्यं भेषजैः सम्प्रयुक्तं
प्रायः पुंसां यद् भवेत् सा दुराशा ।
क्षीणाङ्कः स्यादोषधीशोऽपि यस्मात्
सोमोऽस्माकं ब्राह्मणानां तु राजा ॥ ७३ ॥

विष्ठास्थिभक्षकैर्यस्तु कृमिराशिभिरावृतः ।
तस्य देहस्य को लोभो विश्वासो विदुषामपि ॥ ७४ ॥

आजन्म विविधैर्भक्ष्यैः कृत्याकृत्येन पोषितम् ।
तदन्ते जयते जन्तोः शरीरं भस्म केवलम् ॥ ७५ ॥

निपतति प्रलयानलतेजसा
सुरगिरिः परिशुष्यति सागरः ।
भवति भस्मधरा सनगा यदा
वपुषि कात्र कथा क्षणभङ्गुरे ॥ ७६ ॥

वपुरसारमपि क्षणिकं भवेत्
सुकृतिनां परमार्थमुदासये ।
अपि हि दुर्बलवल्कलगर्भिणी
त्व(मु ? मृ)तरूपफला कदली न किम् ॥७७॥

वपुः स्मृतं यज्जरसन्धिजर्जरं
व्रजेन्नरस्तेन पदं च जर्जरम् ।
अनेकगात्रं शकटं सुबन्धनं
महाभरे किन्तु भवेन्न साधनम् ॥ ७८ ॥

मलिनमस्थिकफादिभिरावृतं
वपुरलं कृतिना भवलङ्घने ।
अपि हि घोरमनार्यजनाकुलं
प्रवहणं हितमेव महार्णवे ॥ ७९ ॥

परधनं परयोषितमाग्रहं
परिहरेदिह दुर्जनसङ्गतिम् ।
शकटविग्रहयोरवनं हितं
सुकृतिनां गतये नतु भञ्जनम् ॥ ८० ॥

---

१. 'नाशकये' ख. पाठः.

यद्यत् पुंसां भवति हि मुदे वस्तु संसारभाजां
जाने पश्चाद् रुचिरमचिराद् दुःखबीजत्वमेति ।
तत्तज्जन्मप्रलयरचना नूनमेवं विदित्वा
मुह्यन्त्यन्ये न खलु कृतिनोऽसारसंसारवृत्ते ॥ ८१ ॥

इति शतगुणाचार्यतनयविश्वरूपदेवविरचिते
विवेकमार्तण्डे मोहनिग्रहो नाम
द्वितीयः प्रबोधः ॥

## अथ तृतीयः प्रबोधः ।

केवलोऽपि कृपूधातुः सामर्थ्ये वर्तते यदा ।
उपसर्गद्वितीयो यत् तदारिः किं न बाध्यते ॥ १ ॥

सङ्कल्पाख्यं विकल्पाख्यं मनसो बन्धनं दृढम् ।
भित्त्वा विज्ञानखड्गेन स्वयं मुक्तो भवेन्नरः ॥ २ ॥

सुखं वाप्यथवा दुःखं मनसैव प्रकल्पितम् ।
निर्विकल्पे गते चित्ते न बन्धः सुखदुःखयोः ॥ ३ ॥

अन्यस्त्वमहमित्यादिभेदभिन्नं जगत्त्रयम् ।
दृश्यते सततं यस्माद् विकल्पः सोऽभिधीयते ॥ ४ ॥

चिद्रूपमन्यथातत्त्वं प्रतिभाति यदन्यथा ।
इन्द्रियाणां च वैकल्याद् विकल्पः सोऽभिधीयते ॥ ५ ॥

१. 'प्राप्याथ' ख. पाठः.

दृष्टादृष्टपदार्थस्य स्थापना हृदि यद् भवेत् ।
कदाचिदिच्छया नित्यं स सङ्कल्पोऽभिधीयते ॥ ६ ॥
यादृशो हृदि सङ्कल्पस्तादृशं तत्फलं स्मृतम् ।
प्राप्यते शर्करास्वादो न तथा निम्ब(स्य ?)भक्षणात्
[॥ ७ ॥
शिलायां देवतावेशो मन्त्रावेशो ग्रहादिषु ।
तीर्थेषु पुण्यनिर्देशः सङ्कल्पादेव जायते ॥ ८ ॥
कर्ता स एव ते मन्त्रा वर्णास्तेनैव याजिताः ।
दृश्यते विविधं कर्म सङ्कल्पान्निर्विषादिकम् ॥ ९ ॥
न स्नानस्य न दानस्य तपसो न जपस्य वा ।
न, प्राप्नोति फलं किञ्चित् सङ्कल्परहितो यदि ॥ १० ॥
नादत्तपुण्यसङ्कल्पो नरः शुध्यति वारिणा ।
न पूतो धीवरस्तस्मात् कृतैः स्नानशतैरपि ॥ ११ ॥
अवगाह्य जलं माघे स्नातको दुरितं दहेत् ।
नतु तत्र स्थितो मीनः सङ्कल्परहितो यतः ॥ १२ ॥
समर्प्य कुसुमं भक्त्या शम्भवे न पुनर्भवेत् ।
पुष्पलक्षमपि त्यक्त्वा लब्धपुण्यो न मालिकः ॥ १३ ॥
पत्रपुष्पफलत्यागात् पुरुषो यद् दिवं व्रजेत् ।
यद्वृक्षो न भवेत् स्वर्गी सङ्कल्पस्तत्र कारणम् ॥ १४ ॥
ब्रह्मचारी दिवं प्राप्तो हुत्वा दर्भशिखामपि ।
प्रज्वाल्य निखिलं कर्म किं षण्डो नरकं गतः ॥ १५ ॥
गिरिगह्वरशायी च जटी वल्कलधारकः ।
वानप्रस्थपदं प्राप्तः किं पुलिन्दोऽपि तादृशः ॥ १६ ॥

अमैथुनस्तु निर्वैरो नग्नो मलिनविग्रहः ।
व्रती या(ति) नरः स्वर्गं बालकः किं (न ? नु) तादृशः
[॥ १७ ॥
शीतातपसहो नित्यं जटिलो धूलिधूसरः ।
गर्दभो न गतः स्वर्गं सङ्कल्पस्तत्र कारणम् ॥ १८ ॥
मुनिः प्रक्षाल्य कौपीनं महत् पुण्यमवाप्तवान् ।
किं (न ? नु) स्याद् रजको धर्मी धौतैर्वस्त्रशतैरपि ॥ १९ ॥
वह्निबीजमिदं रेफं द्विगुणं प्रजपन्नपि ।
नहि शुध्यति यद् भृङ्गः सङ्कल्पस्तत्र कारणम् ॥ २० ॥
एकमेव पशुं हत्वा दीक्षितो गतिमान् भवेत् ।
न कस्माल्लुब्धकः स्वर्गी हतैः प्राणिशतैरपि ॥ २१ ॥
ब्रह्मलोकं नरो याति सत्यमग्निपरिग्रहात् ।
किं कृतं लोहकारेण यतो यस्मादसौ गतिः ॥ २२ ॥
सत्यमग्निप्रवेशेन लभ्यते परमा गतिः ।
किमन्ये वह्निना दग्धा नरके हि परिस्थिताः ॥ २३ ॥
नासङ्कल्पितमाप्नोति कृतकर्मफलं पुमान् ।
पश्यन्नाकं व्रती याति नोपवासी बुभुक्षितः ॥ २४ ॥
संनिपत्य गिरेः शृङ्गाद् उभौ च पुरुषौ मृतौ ।
व्रती त्रिदिवमायातो नरकं तृणलावकः ॥ २५ ॥
संप्रविश्य महानद्या एककालमृता अपि ।
स्वर्गं ++++++ किमन्ये यमशासनम् ॥ २६ ॥
तुल्यो हि मृत्युसम्बन्धो नराणां समराङ्गणे ।
शूराः प्रपेदिरे स्वर्गं कथमन्ये यमालयम् ॥ २७ ॥

सदृशे कर्मसम्बन्धे फलमेवं पृथक् पृथक् ।
कुरुते सततं पुंसां सङ्कल्पो बलवान् नृणाम् ॥ २८ ॥
जपहोमव्रतादीनां प्रतिभूरिव कर्मणाम् ।
निर्मलो यस्य सङ्कल्पो न तस्य फलवञ्चनम् ॥ २९ ॥

एते दैत्यवरा अमी ननु सुरा यक्षा इमे राक्षसा
एते सिद्धमुनीन्द्रकिन्नरगणा एते मनुष्यादयः ।
इत्येवं बहुधा विकल्पजनि(ता ? त)भ्रान्तिप्रभेदात्मनः
शीतांशोः पटलोपमादिव सदा भेदोऽस्ति नो सत्यतः
[॥ ३० ॥

भाट्टाः श्वेतपटा विटाः क्षपणका बौद्धा बुधा बोधका-
श्चार्वाका जटिला विलासरहिताः संन्यासिनोऽन्येऽपि
[वा ।
स्पर्धावर्धितवाग्विवाददहनज्वालाभितप्ता भृशं
भ्रान्ता ह्याहुरनेकधा शिवमजं हा हा विकल्पा कला
[॥ ३१ ॥

यद्वाक्पथमतीतस्य विष्णोरतुलतेजसः ।
एकस्य बहुधा भाति विकल्पस्तत्र कारणम् ॥ ३२ ॥
विकल्पितमिदं विश्वं न विश्वं परमार्थतः ।
मरीचिकापयःपूरः किमाप्लावयति मेदिनीम् ॥ ३३ ॥
अयं गुरुरहं शिष्यो ध्येयमेकमनामयम् ।
सिद्धिरेषा ममेत्यादि मनसा च विकल्पना ॥ ३४ ॥
मोहाद् बद्धमिवात्मानमबद्धमपि मन्यते ।
नलिकाभ्रमणभ्रान्तः पक्षीव विकलो जनः ॥ ३५ ॥

प्रसन्नता न स्तवनादिभिर्वा
(न ? ना)गादिदानादिभिरप्रसादः ।
दुःखं वियोगान्न सुखं विरागा-
दाकल्पितं स्यान्मनसैव सर्वम् ॥ ३६ ॥

उद्वर्तिते कुङ्कुमचन्दनाभ्यां विष्ठादिना लेपकृते शरीरे।
बालो विषादं न मुदं विधत्ते प्रायो यतः कल्पनया
[विहीनः ॥ ३७॥

हृतं कथञ्चित् सहसैव चोरै-
र्हस्तस्थितं यस्य महानिधानम् ।
अजानतस्तस्य हि नास्ति दुःखं
ततो भवेत् कल्पितमेव सर्वम् ॥ ३८ ॥

मग्नं यदा पोतमिदं समुद्रे
गोत्रं मदस्तत्र तदा निमज्ज्य ।
श्रुत्वोक्तिमारोदिति चाशु मूढो
दुःखं हि सङ्कल्पितमत्र जन्तोः ॥ ३९ ॥

यदेव + + प्रभवत्यवश्यं सङ्कल्पितेनैव सुखं जनस्य ।
(हो ? हे)मोपलं प्राप्य परं न कस्माज्जात्यन्ध इष्टां
[मुदमादधाति ॥ ४०॥

हर्षो(नु ? न) लेपाद् वरचन्दनादे-
र्न पङ्कविष्ठादिकृताद् विषादः ।
हानेन दुःखं न सुखं च लाभात्
सर्वं भवेत् कल्पितमेव पुंसाम् ॥ ४१ ॥

न ते विजानो(?)ज्ञानेन ध्यानस्थानानि योगिनाम् ।
उपाधितत्त्वयुक्तानि कुर्वन्त्यष्टगणोदयम् ॥ ४२ ॥

उपाधिश्च तथा तत्त्वं द्वयमेतदुदाहृतम् ।
उपाधिः प्रोच्यते वर्णस्तत्त्वमात्माभिधीयते ॥ ४३ ॥

उपाधिरन्यथाज्ञानं तत्त्वसंस्थितिरन्यथा ।
यथान्यवर्णयोगेन + + + स्फाटिको मणिः ॥ ४४ ॥

समस्तोपाधिविध्वंसे सदाभ्यासेन योगिनाम् ।
मुक्तावच्छुक्तिभेदेन स्वयमात्मा प्रकाशते ॥ ४५ ॥

विरजाः पर आकाशादज आत्मा महानिति ।
स्तौति श्रुतिरहोरात्रं तत्त्वं तत् कवयो विदुः ॥ ४६ ॥

शब्दादीनां च तन्मात्रा यत् कण्ठादिषु (तु) स्थिता ।
तावदेव स्मृतिर्ध्यानं समाधिः स्यादतः परम् ॥ ४७ ॥

धारणा पञ्चनाडी च ध्यानं स्यात् षष्टिनाडिकम् ।
दिनद्वादशकेन स्यात् समाधिः प्राणसंयमात् ॥ ४८ ॥

अम्बुसैन्धवयोः साम्यं यथा भवति योगतः ।
तथात्ममनसोरैक्यं समाधिः सोऽभिधीयते ॥ ४९ ॥

यदा संक्षीयते प्राणो मनश्च प्रविलीयते ।
तदा समरसत्वं यत् समाधिः सोऽभिधीयते ॥ ५० ॥

यत् समत्वं द्वयोरत्र जीवात्मपरमात्मनोः ।
समस्तनष्टसङ्कल्पः समाधिः सोऽभिधीयते ॥ ५१ ॥

इन्द्रियेषु मनोवृत्तिरल्पापेक्षा निरन्तरम् ।
यस्तु सर्वाणि भूतानि पश्यत्यात्मनि संयमी ॥ ५२ ॥
आत्मानं सर्वभूतेषु स ततो नाभिलिप्यते ।
भूम्यम्ब्वग्न्यनिलाकाशाद् बहिः किञ्चिन्न विद्यते ॥ ५३॥
त(म ? प)सा तत् समं सर्वं योगिनां न तु कर्मिणाम् ।

एवं कृतं सारमसारमेवं
तावद्विवक्ष्येति मनुष्यलोकः ।
एवं नरो वेत्ति परं न तत्त्वं
ज्ञाते परे तत्त्वमिदं समस्तम् ॥ ५४ ॥
सर्वत्र शास्त्रागमशब्दजाले-
र्यत् कथ्यते ब्रह्म परं मुनीन्द्रैः ।
तत्त्वं यदा तद् भवति प्रसन्नं
भूयः किमेतैः श्रमदैर्विवादैः ॥ ५५ ॥

उपाधिरन्यथा ज्ञानं तत्त्वसंस्थितिरन्यथा ।
(कु ? गु)ञ्जानां पुञ्जवद् भाति सन्निधौ स्फाटिको
[माणिः ॥ ५६ ॥
सन्मणीनां यथा हारे प्रत्येकं दृश्यते गुणः ।
बहिरन्तश्च भूतेषु तद्वदात्मा विराजते ॥ ५७ ॥
यथा काष्ठगुणे वह्निः कुम्भतोयेषु भास्करः ।
एकोऽप्यनेकधा भाति बहुधा भूतपङ्क्तिषु ॥ ५८ ॥
वापीकूपतटाकादौ विवस्वानिव लक्ष्यते ।
आत्मा भूतगुणे भाति न तत्र परमार्थतः ॥ ५९ ॥

अग्राह्यं गगनं भाण्डे बहिरन्तःस्थितं यथा ।
आब्रह्माण्डघटे तद्वत् परमात्मा विराजते ॥ ६० ॥
लीयते हि यथाकाशं घटे भिन्ने सहस्रधा ।
तथात्मा न क्षयं याति शरीरे प्रलयं गते ॥ ६१ ॥
आत्मा देहविनाशेऽपि निर्मलो निरुपद्रवः ।
महीकूपजलाभावे नाभावो विद्यते रवेः ॥ ६२ ॥
क्षायन्त सर्वभूतानि परमात्मा न हीयते ।
काष्ठमेव भवेद् भस्म न तत्स्थः क्वापि पावकः ॥ ६३ ॥

तोये गते किन्नु गतो मृगाङ्को
नीते (घटे) किं गगनं प्रयाति ।
आत्मा शरीरेषु चलेषु नित्यो
निगद्यते निश्चल एक एव ॥ ६४ ॥

सृष्टिस्थितिप्रलयमेति शरीरमेव
नात्मा प्ररोहति न तिष्ठति न प्रयाति ।
जाता स्थिता हि विगता गगने घनाली
नैवाम्बरं प्रचलितं वदतीह कोऽपि ॥ ६५ ॥

न गोपुरं बिम्बजलादिदृश्यं
व्योमेव तारकायुक्तं ............... ।
तद्वदनेकशरीरे समस्तको भाति परमात्मा (?)
गवाक्षेष्वनेकेषु संवीक्ष्यमाणं
यथैकं नभो भात्यनेकप्रकारम् ।
शिवः सर्वसंस्थः सदानन्दकन्दः
स्थितो देहसंवेष्टने (को? सो)ऽयमात्मा ॥ ६६ ॥

निस्तरङ्गे जले यद्वदापादतलमस्तकम् ।
पश्यत्यभिन्नमात्मानं तद्वन्मनसि (संयमी) ॥ ६७ ॥
निर्मले दर्पणे यद्वत् प्रतिरूपं च पश्यति ।
विमले मानसे योगी तद्वदात्मानमात्मनि ॥ ६८ ॥
आत्मनो मनसि ध्यानं वाचि नैवात्मनः कथा ।
क्रियायामात्मनः कर्म कुर्वन्नात्ममयो भवेत् ॥ ६९ ॥
सत्त्वाख्यगुणसम्बन्धात् संस्थाप्य महतीं प्रभाम् ।
दृढमन्तःस्थितो योगी तमो हन्ति प्रदीपवत् ॥ ७० ॥
स्नेहक्षये गुणाढ्योऽपि तेजस्वी सर्वदर्शनः ।
न निर्वाणं गतो योगी व्यावर्तयति दीपवत् ॥ ७१ ॥

स्नेहसूत्ररहिता निरुद्यमाः
कर्म युक्तिपुरसत्यवादिता ।
के समीपमयुगेत्ययोगवान्
पुत्रमित्रपशुपालवान् भवेत् (?) ॥ ७२ ॥

अन्धकारं निराचष्टे सामर्थ्येन हितं यथा ।
अज्ञानादसि संसारे ज्ञानान्मुक्तिस्तथात्मनि ॥ ७३ ॥

यदा मनो नष्टसमस्तदोषं
शान्तिं दधानं विषयावसानम् ।
त(थै ? दै)व मुक्तिः कथिता मुनीन्द्रैः
किं देहपातादपवर्गसिद्धिः ॥ ७४ ॥

इति शतगुणाचार्यतनयविश्वरूपदेवविरचिते
विवेकमार्ताण्डे सङ्कल्पविकल्पच्छेदोनाम
तृतीयः प्रबोधः ॥

अथ चतुर्थः प्रबोधः ।

अथ कालस्य विज्ञानं प्रवक्ष्यामि यथाश्रुतम् ।
जीवितं मरणं योगी यतो जानाति निश्चितम् ॥ १ ॥

प्रोच्यते कलसङ्ख्याने विधिरेष यतो बुधैः ।
कलाकाष्ठानिमेषादिरतः कालोऽभिधीयते ॥ २ ॥

श्वासोच्छ्वासात्मकः प्राणः षड्भिः प्राणैः कलं स्मृतम् ।
कलैः षष्टिभिरेव स्याद् घटिका कालसङ्ख्यया ॥ ३ ॥

प्राणानामधिकं षष्ट्या घटिकायां शतत्रयम् ।
भवन्ति प्रहरे पूर्णे शतानां सप्तविंशतिः ॥ ४ ॥

घटिकाभिरहोरात्रं षष्टिभिः किल जायते ।
दिनं त्रिंशद्भिराख्यातं निशा त्रिंशद्भिरुच्यते ॥ ५ ॥

मासस्त्रिंशदहोरात्रैर्ऋतुरेको द्विमासिकः ।
ऋतुभिः षड्भिरब्दं स्यादयनं त्वृतुभिस्त्रिभिः ॥ ६ ॥

अह्नां षष्ट्यधिकानि स्युः शतानि त्रीणि वत्सरे ।
मासाः संक्रान्तयो वापि द्वादशैव प्रकीर्तिताः ॥ ७ ॥

एवं षट्शतयुक्तानि सहस्राण्येकविंशतिः ।
घटिका वत्सरे पूर्णे ब्रुवते कालवेदिनः ॥ ८ ॥

चतुस्सहस्रहीनानि लक्षाणीह त्रयोदश ।
घटिकानां प्रजायन्ते षष्टिवर्षगणैः शुभैः ॥ ९ ॥

अष्टादशघटीलक्षैरुक्तं चन्द्रसहस्रकम् ।

---

१. 'कन्यका' ख. पाठः.

धन्या जीवन्ति संसारे कुर्वाणाः सुकृतं सदा ॥ १० ॥

चन्द्रलक्षश्च[1] नाडीनां तथाष्टादशकोटयः ।
पश्यन्ति योगिनो धीराः परमानन्दचेतसा ॥ ११ ॥

नवाम्बुजानि जायन्ते त्रयस्त्रिंशच्च कोटयः ।
तथा द्वादशलक्षाणि घटिकानां कलौ युगे ॥ १२ ॥

अष्टादशाम्बुजानि स्युः षट्षष्टिरिह कोटयः ।
चतुर्विंशतिलक्षाणि घटिका द्वापरे स्मृताः ॥ १३ ॥

सप्तविंशतिरब्जानामेकोनशतकोटयः ।
षट्त्रिंशदिह लक्षाणि त्रेतायां घटिकाः स्मृताः ॥ १४ ॥

सप्तत्रिंशत्सरोजानि द्वात्रिंशच्छतकोटयः ।
अष्टौ लक्षाणि नाडीनां चत्वारिंशत् कृते युगे ॥ १५ ॥

मासो यस्तु मनुष्याणां भवेत् पक्षद्वयात्मकः ।
तत्पितॄणामहोरात्रं प्रवदन्ति मनीषिणः ॥ १६ ॥

यो वत्सरो मनुष्याणामयनद्वयसंयुतः ।
देवानां तदहोरात्रं चन्द्रसूर्यात्मकं विदुः ॥ १७ ॥

क्षीयन्ते मनवः सर्वे पतन्तीन्द्राश्चतुर्दश ।
प्रलयं यान्ति भूतानि ब्रह्मणो दिनमध्यतः ॥ १८ ॥

चतुर्युगसहस्रेण दिनं सृष्टिकरं भवेत् ।
एतावती निशा धातुः सर्वसंहारकारिणी ॥ १९ ॥

चतुर्युगसहस्राभ्यामहोरात्रं च शाश्वतम् ।
एवं ब्रह्मा जगत्कर्ता शतं वर्षाणि जीवति ॥ २० ॥

---

१. 'क्षानि' ग. पाठः.

ब्रह्मणो जीविताब्देन वैष्णवं कथ्यते दिनम् ।
विष्णुरेवं महाभूतः शतं वर्षाणि जीवति ॥ २१ ॥
विष्णोरब्दशतेनैव रुद्रस्य दिवसो भवेत् ।
एवंविधो महादेवः शतं वर्षाणि जीवति ॥ २२ ॥
कल्पो ब्रह्मदिनं प्रोक्तं महाकल्पो दिनं हरेः ।
आदिकल्पो दिनं शम्भोरेवं कालपरम्परा ॥ २३ ॥
अथ किं बहुनोक्तेन यावत् सङ्ख्या प्रवर्तते ।
तावत् कालभयं पुंसामिति शास्त्रस्य निश्चयः ॥ २४ ॥
उक्तं बाह्यमहोरात्रं यत् प्रमाणं मनीषिभिः ।
प्राणो घटी भवेत् प्राणैरहोरात्रं तु षष्टिभिः ॥ २५ ॥
षष्टिभिस्तैरहोरात्रैर्ऋतुराभ्यन्तरो मतः ।[1]
वर्षे षडृतवो ज्ञेया मासा द्वादश विश्रुताः ॥ २६ ॥
सङ्क्रान्तयोऽपि तावत्यः कुलीरमकरादयः ।
चरास्थिरविभागाश्च मेषाद्या राशयः स्मृताः ॥ २७ ॥
कुर्वन्ति सर्वकालेषु स्वनामसदृशं फलम् ।
घटीभिः पञ्चभिर्मासः पञ्चाभिः संक्रमो भवेत् ॥ २८ ॥
ऋतुर्दशभिराख्यातस्त्रिंशद्भिरयनं तथा ।
अयनद्वयसंयुक्तं वर्षं स्यात् षष्टिनाडिकम् ॥ २९ ॥
चैत्रमासादितः कृत्वा क्रमेणैव विचारयेत् ।
पूर्वाह्णे चैत्रवैशाखौ वसन्तो घटिका दश ॥ ३० ॥

---

१. 'षष्ट्या शतत्रयेण स्याद् वत्सरोऽभ्यन्तरो मतः ।' ग. पाठः.

ज्येष्ठाषाढौ तु मध्याह्ने ग्रीष्मकालोऽभिधीयते ।
नभोभाद्रपदौ वर्षा अपराह्णे घटिका दश ॥ ३१ ॥
आश्विनः कार्त्तिको मासः पूर्वरात्रेऽस्ति शारदः ।
मार्गशीर्षस्तथा पुष्यो हेमन्तो रात्रिमध्यतः ॥ ३२ ॥
शिशिरो रात्रिपर्यन्ते माघफाल्गुनसंयुतः ।
विषुवाख्यः सदा चैत्रे जायते मेषसंक्रमः ॥ ३३ ॥
वैशाखे मेषसंक्रान्तिर्ज्यैष्ठे मिथुनसंक्रमः ।
आषाढे कर्किसङ्क्रान्तिः प्रोच्यते दक्षिणायनम्
[ ॥ ३४ ॥
श्रावणे सिंहसङ्क्रान्तिः कन्यासङ्क्रान्तिर्भाद्रपदे ।
आश्विने तुलासङ्क्रान्तिर्वृश्चिकाख्या तु कार्त्तिके ॥ ३५ ॥
मार्गशीर्षे च धनुषः पुष्ये मकरसम्भवः ।
मकराख्या तु सङ्क्रान्तिरुत्तरायणसंज्ञिता ॥ ३६ ॥
माघे तु कुम्भसङ्क्रान्तिः फाल्गुने मीनसंक्रमः ।
मेषं च मिथुनं सिंहं तुलाकार्मुककुम्भकाः ॥ ३७ ॥
षडेते पिङ्गलामार्गे प्रवर्तन्ते यथाक्रमम् ।
वृषभः कर्कटः कन्या वृश्चिको मकरस्तिमिः ॥ ३८ ॥
एतेषामुदयो नित्यं वाममार्गेण जायते ।
यस्मिन् मासे तु यो राशिः स तत्रैवोदितः शुभः
[ ॥ ३९ ॥
अन्यथा दुःखितः स स्यादिति शास्त्रस्य निश्चयः ।
अष्टादशशतान्याहुः प्राणानां सङ्क्रमे सदा ॥ ४० ॥

ऋतौ षट्त्रिंशदुक्तानि त्रिगुणान्ययने तथा ।
षट्शतानि भवन्त्येवं सहस्राण्येकविंशतिः ॥ ४१ ॥
प्राणानामन्तरे वर्षे सङ्ख्येयं कथिता बुधैः ।
बाह्यमाभ्यन्तरं चैव कालमानं द्विधा स्थितम् ॥ ४२ ॥
चन्द्रभास्करचारेण ज्ञायते खलु नान्यथा ।
इडायां चन्द्रमाः प्रोक्तः[२] पिङ्गलायां दिवाकरः ॥ ४३ ॥
सुषुम्नायां भवेद् वह्निरेक एव सदागतिः ।
इडाख्या चोत्तरा नाडी पिङ्गला दक्षिणा स्मृता ॥ ४४ ॥
सुषुम्ना मध्यमा सा तु यत्र सङ्क्रमते खगः ।
इडा विनिर्गमे श्रेष्ठा प्रवेशे पिङ्गला शुभा ॥ ४५ ॥
शस्यते मध्यमा नाडी सुषुम्ना योगसाधने ।
इडायां प्रमदा प्रोक्ता पिङ्गलायां च पूरुषः ॥ ४६ ॥
नपुंसकं सुषुम्नायां प्रश्नकाले तु लक्षयेत् ।
नाडी यथोक्तलाभाय प्रोच्यते प्राणवाहिनी ॥ ४७ ॥
यतः प्राणो भवेत् पुंसामर्थनाशाय सर्वदा ।
सर्वासामपि नाडीनामहितः प्राणनिर्गमः ॥ ४८ ॥
प्रवेशोऽभिमतं कार्यं साधयेत् पृच्छकस्य हि ।
अग्रतो वामतश्चोर्ध्वं यं यं पृच्छति संस्थितः ॥ ४९ ॥
तत् तथैवेति निर्दिष्टं सफलं हिमरश्मिना ।
अधो दक्षिणतः पृष्ठे स्थितः पृच्छति यः सदा ॥ ५० ॥
तत्सर्वं सफलं कार्यं जायते चण्डरश्मिना ।
यदन्यत्र चरेज्जीवो विशत्यन्यत्र साधकः ॥ ५१ ॥

१. 'स्त्र' ग. पाठः. २. 'माप्तः' ख. पाठः.

तद् रिक्तं निष्फलं प्राहुरन्यथाचरितं शुभम् ।
यात्रा पूजा जपो यज्ञो विवाहो दानमुत्सवः ॥ ५२ ॥

नियमः शान्तिकं कर्म सौख्यं सौम्येन सिध्यति ।
विवादे सङ्गरे द्यूते सन्नाहे जनमैथुने ॥ ५३ ॥

अहितोच्चाटने कार्ये दीप्तो भानुः प्रशस्यते ।
निर्गमे वा प्रवेशे वा कलहे शान्तिकेऽपि वा ॥ ५४ ॥

वर्जयेन्मध्यमाचारं विना विज्ञानसाधनम् ।
गृहाच्चन्द्रेण निर्यातः प्रविष्टो भानुना रणे ॥ ५५ ॥

शून्याङ्गं वैरिणं कृत्वा कातरोऽपि जयी भवेत् ।
निष्क्रान्तो भानुना गेहात् प्रविष्टः शशिना रणे ॥ ५६ ॥

जीवाङ्गो यस्य मा वैरी स शूरोऽपि विनश्यति ।
दस्यवः शत्रवो भूपाः कितवा व्यवहारिणः ॥ ५७ ॥

एते शून्यगताः सौम्याः पूर्णस्याभयदाः स्मृताः ।
पूर्वामुदीचीं शशिनः प्रवाहे
भानोः प्रतीचीं दि++क्षिणां च ।
प्रश्ने विधाय व्यसनाय युक्तः
सर्वेषु कार्येषु जयं लभेत ॥ ५८ ॥

प्रवृत्तिः पञ्चतत्त्वानामेकैका घटिका स्मृता ।
इडापिङ्गलयोरेव वायुचारेण लक्षयेत ॥ ५९ ॥

वायोराद्या द्वितीयाग्नेस्तृतीया घटिका भुवः ।
चतुर्थी वरुणस्यैव पञ्चमी नभसो भवेत् ॥ ६० ॥

अम्लश्च वर्तुलो नीलो मारुतश्चतुरङ्गुलम् ।
तिर्यग्वहति नासायां वर्जितः शुभकर्मसु ॥ ६१ ॥

त्रिको(णो) लोहितस्तीक्ष्णो वह्निरष्टाङ्गुलो मतः ।
ऊर्ध्वं वहति ना( ना ? सा)यां शुभकर्मणि न स्मृतः ॥ ६२ ॥

पीता ज्वाला चतुष्कोणा जगती द्वादशाङ्गुला ।
मध्ये वहति नासायां सिद्धिदा सर्वकर्मसु ॥ ६३ ॥

अर्धचन्द्रामृतं तोयं कषायं षोडशाङ्गुलम् ।
अधो वहति नासायां सर्वदा शान्तिकारकम् ॥ ६४ ॥

अप्रमाणमनाकारमवर्णमरसं शिवम् ।
कथ्यते सर्वसंख्याने सर्वकामक्षयङ्करम् ॥ ६५ ॥

आग्नेयं वायवं योगं नाभसं तु विवर्जयेत् ।
सर्वदा सर्वकार्येषु न विद्यादीप्सितं फलम् ॥ ६६ ॥

बृहस्पतिः स्मृतो वायौ शुक्रो वह्नौ बुधो भुवि ।
इन्दुरप्सु वसन्त्येते वाममार्गे शुभा ग्रहाः ॥ ६७ ॥

पवने राहुरस्त्यग्नौ[1] कुजो भूमौ दिवाकरः ।
जले शनैश्चरो ह्येते घोरा दक्षिणतो ग्रहाः ॥ ६८ ॥

शुभाः शुभेषु कार्येषु घोरा घोरेषु सिद्धिदाः ।
अन्यथा फलहन्तारो ग्रहाः सर्वे प्रकीर्तिताः ॥ ६९ ॥

गुरुशुक्रबुधेन्दूनां वारे स्याद् वामनाडिका ।
सिद्धिदा सर्वकार्येषु शुक्लपक्षे विशेषतः ॥ ७० ॥

१. 'च्य' ख. पाठः.

अर्कमङ्गलसौरीणां वारे वै दक्षिणा स्मृता ।
फलदा सर्वकार्येषु कृष्णपक्षे विशेषतः ॥ ७१ ॥

इडायां पिङ्गलायां वा यत्र वायुः प्रवर्तते ।
आदौ तद् वादमुद्धृत्य यात्रायां लभते फलम् ॥ ७२ ॥

शुक्लप्रतिपदि वामा कृष्णायां पिङ्गला वहत्युषसि ।
त्रीणि त्रीणि दिनानि च वायोरेवं गतिः शुभदा ॥ ७३ ॥

प्रत्यूषे क्वचिदथवा प्रवहति पवनश्च यस्य विपरीतः ।
योगवियोगसमुत्थं विन्दत्यचिरेण दुःखं सः ॥ ७४ ॥

प्रथमे कलहप्राप्तिरर्थनाशो द्वितीयके ।
तृतीये तु प्रवासः स्याच्चतुर्थे मित्रखण्डनम् ॥ ७५ ॥

पञ्चमे देहविध्वंसः षष्ठे देशाधिपक्षयः ।
सप्तमे विरहक्लेशो जायते मृत्युरष्टमे ॥ ७६ ॥

एवमेव विजानीयाद् दशपञ्चादिनोदयम् ।
पक्षद्वयेऽपि मेधावी वामदक्षिणमारुतात् ॥ ७७ ॥

मासादौ वत्सरादौ च पक्षादौ वा यदा तदा ।
क्षयकालं परीक्षेत वायुचारवशाद् बुधः ॥ ७८ ॥

अहोरात्रं यदैकत्र वहते यस्य मारुतः ।
तदा तस्य भवत्यायुः सम्पूर्णं वत्सरत्रयम् ॥ ७९ ॥

अहोरात्रद्वयं यस्य पिङ्गलायां सदागतिः ।
तस्य वर्षद्वयं प्रोक्तं जीवितं कालदर्शिभिः ॥ ८० ॥

---

१. 'र्कोङ्गारकसौ, २. 'घटते' ग. पाठः.

त्रिरात्रं वहते यस्य वायुरेकपुटे स्थितः ।
मासा द्वादश तस्यायुः प्रवदन्ति विपश्चितः ॥ ८१ ॥

दशरात्रं यदा वाति भानुरेवं निरन्तरम् ।
तदा कालभयं पुंसां मासस्यान्ते भविष्यति ॥ ८२ ॥

माससेकं यदा वाति पिङ्गलायां प्रभञ्जनः ।
दिनमेकं ततो जीवेत् ततो याति यमालयम् ॥ ८३ ॥

प्राणो यस्य दशाहानि वामदक्षिणतः क्रमात् ।
संक्रान्त्या रहितो वाति तस्यायुः संक्रमावधि ॥ ८४ ॥

त्यक्तसंक्रमणो यस्य मासमेकं वहेत् खगः ।
मध्याह्नात् परतो देही स कालस्य मुखं विशेत् ॥ ८५ ॥

स्पन्दते विषुवे यस्य युगपन्नासनद्वयम् ।
स सद्यो निधनं याति बहुयापि हि रक्षितः ॥ ८६ ॥

संक्रान्त्यः शिशिरादीनां षडाद्याः याः प्रकीर्त्तिताः ।
ताभ्यः कालं परीक्षेत योगी पञ्चदिनावधि ॥ ८७ ॥

माघसंक्रान्तिमारभ्य पञ्चरात्रं समीरणः ।
पिङ्गलायां गतो लक्ष्येज्जीवितं वत्सरत्रयम् ॥ ८८ ॥

चैत्रमासं समारभ्य यस्य पञ्च दिनानि च ।
दक्षिणो वहति प्राणः षड् वर्षाणि स जीवति ॥ ८९ ॥

ज्येष्ठमासस्य संक्रान्तौ पञ्चरात्रं दिवाकरः ।
वर्तते यस्य तस्योक्तं नव वर्षाणि जीवितम् ॥ ९० ॥

---

१. 'सदागतिः' ग. पाठः.

यदा श्रावणसंक्रान्तौ पञ्चाहं वर्तते रविः ।
तदा द्वादशवर्षान्तात् काष्ठशय्यां समाश्रयेत् ॥ ९१ ॥
अथाश्विनस्य संक्रान्तौ पञ्चाहानि च भास्करः ।
वहते यस्य तस्यायुः समाः पञ्चदश स्मृताः ॥ ९२ ॥
मार्गशीर्षस्य संक्रान्तौ पञ्चाहानि खगेश्वरः ।
वहते यस्य तस्यायुरष्टादश समाः स्मृताः ॥ ९३ ॥
यदैवं दैवयोगेन वहते रोहिणीपतिः ।
तदैवं विविधा पीडा जायते मरणं विना ॥ ९४ ॥
अनिर्दिष्टेषु मासेषु संक्रान्त्यो या भवन्ति षट् ।
एवं ताभ्योऽपि जानीयाच्चन्द्रेण क्षयमात्मनः ॥ ९५ ॥
जन्मर्क्षे यदा चन्द्रो भानुश्च समसप्तके ।
तदा पौष्णो भवेत् कालो मृत्युनिश्चयकारकः ॥ ९६ ॥
तस्मिन् पौष्णे काले प्र(हर? वह)त्येवं यदा भानुः ।
जीवेत् षोडशवर्षं दैवाद् देही न सन्देहः ॥ ९७ ॥
यामद्वितयं पौष्णे काले यस्य प्रवर्तते सूर्यः ।
तस्य चतुर्दशवर्षं जीवितमुक्तं स्फुटं तज्ज्ञैः ॥ ९८ ॥
यामचतुष्टयमथवा यदैव पौष्णे दिवाकरो वहति ।
जीवितमाहुः कृतिनो द्वादशवर्षं तादिह नूनम् ॥ ९९ ॥
काले पौष्णाभिधे तस्मिन्नहोरात्रं सदागतिः ।
वहते दक्षिणो यस्य स जीवेद् दश वत्सरान् ॥ १०० ॥

---

१. 'दा भवेद् भा' ख. पाठः.

द्विदिनं त्रिदिनं वापि पिङ्गलायां सदा मरुत् ।
अष्टवर्षं तदा प्रोक्तं षडब्दं जीवितं स्मृतम् ॥ १०१ ॥

चतुरो दिवसान् पञ्च पिङ्गलायां ततोऽनिलः ।
चतुर्थे वत्सरेऽपूर्णे तृतीये मृत्युमाविशेत् ॥ १०२ ॥

षड्दिनं वहते यस्य पौष्णयोगे दिवाकरः ।
चतुर्विंशत्यहोहीनं त्रिवर्षं तस्य जीवितम् ॥ १०३ ॥

रविः सप्तदिनं यस्य पौष्णे योगे प्रवर्तते ।
जीवेत् सोऽष्टादशाहानि नव मासान् सम्माद्वयम् ॥ १०४ ॥

वायुरष्टदिनं यस्य वहते दक्षिणे पुटे ।
द्वे वर्षे सप्त मासांश्च षड् दिनानि स जीवति ॥ १०५ ॥

नवरात्रं दशाहं वा दृश्यते यस्य भास्करः ।
द्विवर्षं सचतुर्मासं स जीवेत् वत्सरद्वयम् ॥ १०६ ॥

एकादशदिनं वायुर्वहते यस्य दक्षिणे ।
चतुर्विंशदहोहीनं स जीवेत् वत्सरद्वयम् ॥ १०७ ॥

एकदा द्वादशाहानि वहते यस्य दक्षिणे ।
वर्षं साष्टादशाहं तु नव मासान् स जीवति ॥ १०८ ॥

त्रयोदशदिनं यस्य वहते वायुरेकतः ।
सप्तमासाधिकं वर्षं स जीवेत् षड्दिनोत्तरम् ॥ १०९ ॥

वहते चतुर्दशाहानि पौष्णयोगे यदा रविः ।
चतुर्मासाधिकादब्दादूर्ध्वं याति यमक्षयम् ॥ ११० ॥

---

१. 'द्वां पौष्णे योगे यदापि दक्षखगः ।' ख. पाठः.

पक्षमेकं वहेद् यस्य पौष्णे काले दिनाधिपः ।
स हि संवत्सरादूर्ध्वं क्षणमेकं न जीवति ॥ १११ ॥
पवनः पिङ्गलामार्गे यस्य षोडशवासरान् ।
दिनद्वादशहीने तु वर्षान्ते तस्य संक्षयः ॥ ११२ ॥
यस्य सप्तदशाहानि पिङ्गलायां समीरणः ।
तस्यैकादशमे मासे षड्दिनोने[1] क्षयो भवेत् ॥ ११३ ॥
अष्टादशदिनं यस्य वहते दक्षिणानिलः ।
स द्वादशदिनन्यूनान् दश मासान् प्रजीवति ॥ ११४ ॥
अह्वामेकोनविंशत्या पवनः पिङ्गलागतः ।
कथयत्यष्टमे मासे निश्चितं मरणं नृणाम् ॥ ११५ ॥
यस्य विंशत्यहोरात्रं वहते पिङ्गलानिलः ।
स गच्छति यमस्थानं षण्मासान्ते न संशयः ॥ ११६ ॥
एकविंशत्यहोरात्रं वहते यस्य भास्करः ।
षड्दिनोनं तु षण्मासं स च जीवति मानवः ॥ ११७ ॥
द्वाविंशतिदिनं यस्य दक्षिणे प्रबलोऽनिलः ।
दिनद्वादशसंयुक्तान् पञ्च मासान् स जीवति ॥ ११८ ॥
त्रयोविंशतिरात्राणि सूर्यो यत्र प्रवर्तते ।
तस्यायुः कथ्यते पञ्च मासाः षड्दिनवर्जिताः ॥ ११९ ॥
चतुर्विंशतिमह्नां तु पञ्चविंशतिवासरान् ।
वहते हि चतुर्मासं त्रिमासं जीवितं भवेत् ॥ १२० ॥

---

१. 'नान्ते' ख. पाठः.

अङ्गुल्या पीडितस्य स्फुरति न पविसा(?)
वामनासाप्युपान्ते
नैवोर्ध्वं नासिकान्ते नतु किमपि चल-
च्चक्षुषश्चाग्निरुकं स्यात् ।
षड्भिर्द्वाभ्यां त्रिभिः स्यान्मरणमिह नृणा-
मेकमासेन नूनं
यद्येवं भानुनेत्रे दिगनलशरभू-
संख्यया वासराणाम् ॥ १४० ॥

स्वच्छायामवलोक्य निश्चलदृशा सोमार्कयोरुद्गमे
संपश्येत् प्रचुरायुरम्बरतले शुद्धं समग्रं नरम् ।
निर्बाहुञ्च समायुरम्बरगतं वर्षायुरङ्घ्रिं विना
षण्मासायुरसंयुतञ्च शिरसा दोषाय कृष्णं विदुः
[॥ १४१ ॥

जीवं विष्णुपदत्रयं सुरपदं षण्मातृकामण्डलं
तारापुञ्जमरुन्धतीममृतगोः शुक्रं ध्रुवं लाञ्छनम् ।
एतेष्वेकमतिस्फुटं तु पुरुषः पश्येन्न यः प्रेक्षितः
सोऽवश्यं विशतीह कालसदने[2] संवत्सरादातुरः
[॥ १४२ ॥

प्रभवति पटुदृष्टेः केसरालः कृशानुः
शशधरसमबिम्बो यस्य वा भाति भानुः ।

---

१. 'सन्मात्रका ॥' ख. पाठः. २. व' ग. पाठः.

विगलितसकलायुः प्रेतराजस्य साक्षा-
दतिथिरिह स देही मासि चैकादशे स्यात् ॥ १४३ ॥

जनानमरजातीयान् गन्धर्वनगरान्नरः ।
यः पश्यति विधौ वामे दश मासान् स जीवति ॥ १४४ ॥

क्वचित् पश्यति यो दीप्तं सौ[1]वर्णं वृक्षकाननम् ।
विरूपाणि च भूतानि नव मासान् स जीवति ॥ १४५ ॥

स्थूलाङ्गो हि कृशः कृशो हि सहसा स्थूलत्वमाल-
[म्बते
श्यामो वा कनकप्रभो यदि भवेत् कृ[2]ष्णश्च गौरच्छविः ।
शूरो भीरुरघी च धर्मनिपुणः शान्तो विकारी पुं[3]मा-
नित्यादि प्रकृतेरुशन्ति चलनं मासेऽष्टमे मृत्युदम्
[॥ १४६ ॥

पीत्वा जलं यस्य न याति तृष्णा
भुं[4]क्त्वा भृशं नो धृं[5]तिरस्ति यस्य ।
शक्तिक्षयो वा तनुवर्णलोपो
मासेऽष्टमे तस्य हि कालघातः ॥ १४७ ॥

खण्डं भवेद्यस्य पदं कदाचित्
पङ्काकुले वा पथि पांसुले वा ।
स सप्तमे मासि विहाय सर्वं
प्रयाति याम्यं सदनं मनुष्यः ॥ १४८ ॥

१. 'सु', २. 'गौरस्तु कृष्णच्छ', ३. 'स', ४. 'भुत्वा', ५. 'भृ' ग. पाठः.

पीडा भवेत् पाणितले च जिह्वा-
मूलं त्वशूलं रुधिरं च कृष्णम् ।
वृद्धिर्न रोम्णामपि यत्र दृष्टा
जीवेन्मनुष्यः स हि सप्त मासान् ॥ १४९ ॥

मध्याङ्गुलीनां त्रितयं न चक्रे
रोगं विना शुष्यति यस्य कण्ठः ।
मुहुर्मुहुः प्रस्रवणं च जाड्यं
षड्भिः स मासैः प्रळयं प्रयाति ॥ १५० ॥

काकोलूककपोतसूकरखरध्वाङ्क्षैः कथञ्चित् पुरा
तुल्येनामिषलम्पटेन पटुना यो भक्ष्यते पक्षिणा ।
षण्मासात् पतितः स भीषणतरं पश्यत्यवश्यं यमं
यद् गृध्रेण जटायुषा न किमसौ दृष्टः पुरा रावणः
[॥ १५१ ॥

आच्छाद्यते कर्कशकाकपङ्क्त्या
चापूर्यते वा घनपांसुवृष्ट्या ।
आताड्यते यस्तु चिरं भ्रमर्या
स्यात् पञ्चमे मासि गतायुरेव ॥ १५२ ॥

यस्य स्वदेशेऽपि दिशां विमोहो
नो पूर्वदृष्टस्य निवेदनं स्यात् ।
दीपे प्रणष्टे नतु वेत्ति गन्धं
मासैश्चतुर्भिर्निधनं स गच्छेत् ॥ १५३ ॥

१. 'तु शू', २. 'ष्टो' ख. पाठः.

यस्य मस्तकमारुह्य सरटो बहुवर्णकः ।
दर्शयत्यपरं रूपं चतुर्मासं स जीवति ॥ १५४ ॥

यस्य न स्फुरति ज्योतिः पीडिते नयनद्वये ।
मरणं तस्य निर्देश्यं चतुर्थे मासि निश्चितम् ॥ १५५ ॥

छाया शिरस्यूर्ध्वगतापि तन्वी
सूर्योदये वान्तरधूमवर्ती ।
या दृश्यते पञ्चदिनानि यस्य
त्रिभिः स मासैर्निधनं प्रयाति ॥ १५६ ॥

ऋक्षाणि कष्टानि च यस्त्वकस्मा-
च्छायां निजां पश्यति मूर्धहीनाम् ।
घण्टास्वनं यः शृणुते रतान्ते
मासत्रयात् तस्य वदन्ति मृत्युम् ॥ १५७ ॥

तारा दिवा दिक्षु रजोनिपातं
यो विद्युतं पश्यति खे निरभ्रे ।
इन्द्रायुधं वा स्वयमेव रात्रौ
मासद्वयात् तस्य वदन्ति नाशम् ॥ १५८ ॥

पश्यत्यकस्माद् बककाकहंस-
शिखण्डिनामागमनं नरो यः ।
दिवा महोल्कापतनं स नूनं
मासद्वयादूर्ध्वमुपैति मृत्युम् ॥ १५९ ॥

न यस्य गन्धं न रसं न रूपं
गृह्णाति नासा रसना च चक्षुः ।

१. 'कङ्कहं' ग. पाठः.

चलत्यकस्माद् वदनं प्रवक्तुं
स मासतः प्रेतपतिं प्रयाति ॥ १६० ॥
सूर्योदये फूत्कुरुते मनीषी
वक्त्रेण नित्यं जलपूरितेन ।
यदेन्द्रचापप्रतिमं न तेजो
ज्ञेयस्तथा मृत्युरदूरवर्ती ॥ १६१ ॥

नेत्राग्रस्थितया यस्य कराङ्गुल्यापि दृश्यते ।
उदितः पूर्णिमाचन्द्रो मासमेकं स जीवति ॥ १६२ ॥
लोचनग्रन्थिका यस्य कराङ्गुल्यां न लिप्यते ।
भाति भानुरमावास्यां मासमेकं स जीवति ॥ १६३ ॥
कनिष्ठिकाङ्गुलेः पर्व स्यात् कृष्णं मध्यमं यदा ।
तदायुः प्रोच्यते पुंसामष्टादशदिनावधि ॥ १६४ ॥
घृते तैले जले वापि दर्पणे यस्तु पश्यति ।
शिरोरहितमात्मानं पक्षमेकं स जीवति ॥ १६५ ॥

शैत्यं विदध्यात् तपनोऽपि[२] यस्य
सन्तापकारी ननु शीतरश्मिः ।
न वेत्ति यो वा तुहिनं न चोष्णं
स पक्षमेकं खलु तिष्ठतीह ॥ १६६ ॥
छिद्रं धरण्यामथवार्कबिम्बे
छायाश्रितं पश्यति यस्त्वकस्मात् ।
तस्यैव पुंसो दशमेऽह्नि कान्ता
शोकाकुला मुञ्चति भूषणानि ॥ १६७ ॥

१. 'ग' ख. पाठः. २. 'नु' ग. पाठः.

स्नातमात्रस्य यस्यैतद् वपुः शुष्यति तत्क्षणात् ।
हृदयं हस्तपादं[1] च दशरात्रं स जीवति ॥ १६८ ॥
नासाग्रं रसनाग्रञ्च वक्षश्चैवोरुसम्पुटम् ।
यो न पश्येत् पुरा दृष्टं सप्तरात्रं स जीवति ॥ १६९ ॥

अर्धं[2] च शीतं वपुरर्धमुष्णं
दृश्येत किञ्चिज्ज्वरमन्तरेण ।
मुहुर्मुहुर्यस्य मुखेऽपि शोषः
जीवेत् स सर्वत्र दिनानि सप्त ॥ १७० ॥

यस्य स्वदेशाच्चलितौ तु कर्णौ
वक्त्रं च नासा मृदुतामुपैति ।
पश्येन्न यो भ्रूयुगलस्य मध्यं
जीवेत् स सर्वत्र दिनानि सप्त ॥ १७१ ॥

वायुना पीडितस्यापि सिक्तस्य पयसा मुहुः ।
देहे यस्य न रोमाञ्चः पञ्चरात्रं स जीवति ॥ १७२ ॥
जिह्वा कृष्णा मुखं रक्तं गात्रभङ्गो मनोभ्रमः ।
कुहरस्थस्वरो यस्य स जीवेद् दिनसप्तकम् ॥ १७३ ॥
रक्तोर्ध्वदृष्टिरुष्णास्यः शीतनाभिः सदातुरः ।
ऊर्ध्वश्वासो भवेद् यश्च तस्य स्याद् दिननिर्णयः ॥ १७४ ॥

पश्येत् सर्पिषि भास्करं यदि सदा खण्डं तदा पूर्वतो
याम्ये पश्चिमतोऽपि सौम्यदिशि वा छिद्रान्वितं [मध्यतः ।
षण्मासाद्[3] द्वितयात् तथा प्रथमतः पक्षाद् दशाहात् तथा
पञ्चाहान्म्रियते तु धूमशिखया सौख्यं तु शुद्धे रवौ ॥

---
१. 'दौ', २. 'चा', ३. 'सद्वि' ख. पाठः.

द्वौ पक्षौ हस्तयुग्मे तदनु तिथिगणं सर्वपर्वप्रदेशं
सङ्क(ल्पो ? ल्प्या)यं स्वबुद्ध्या स्तवजपसहितः शम्भु-
[मभ्यर्च्य रात्रौ ।
कुर्याल्लाक्षारसाङ्कं करतलयुगलं प्रातरुत्थाय पश्येत्
कृष्णं यत् पर्व तस्मिन्नहानि च मरणं स्यात्सिते
[ वासिते वा ॥ १७६ ॥

यस्य क्षुधामूत्रपुरीषशुक्रा-
न्येतानि पुंसो युगपद् द्रवन्ति ।
तस्यां तिथौ मासि च पक्षवर्षात्
प्राणप्रयाणं प्रवदन्ति तस्य ॥ १७७ ॥

हीनचन्द्रबलो यस्तु हंसकाकशिखण्डिनाम् ।
सम्पश्येन्मैथुनं क्वापि तस्य मृत्युरदूरतः ॥ १७८ ॥

यः स्वप्ने भक्ष्यते गृध्रैः काकजम्बुककुक्कुटैः ।
स तु संवत्सरादर्वाङ् म्रियते नात्र संशयः ॥ १७९ ॥

नरः पश्यति यः स्वप्ने पतितं चन्द्रमण्डलम् ।
राहुग्रस्तं तु वा हंसं दश मासान् स जीवति ॥ १८० ॥

महिषेण वराहेण कृष्णसारेण वा पुमान् ।
स्वप्ने विदारितो यस्तु स जीवेन्नवमासिकम् ॥ १८१ ॥

हसन्तमपि जल्पन्तं भीतं क्षपणकं मुहुः ।
यो नरः पश्यति स्वप्ने सोऽष्टमे मासि गच्छति ॥ १८२ ॥

यः स्वप्ने पुरुषैः कृष्णैर्नीयते दक्षिणां दिशम् ।
महिषोष्ट्रखरारूढः सप्त मासान् स जीवति ॥ १८३ ॥

अश्नाति यो नरः स्वप्ने सुवर्णं रजतं तथा ।
उद्गिरत्यथवा यस्तु स षष्ठे मासि सीदति ॥ १८४ ॥
स्वप्ने लोहितपीठस्थो लोहिताम्बरभूषितः ।
रक्तचन्दनदिग्धाङ्गः पञ्च मासान् स जीवति ॥ १८५ ॥
ऋक्षवानरमारुह्य यो गच्छेद् दक्षिणामुखः ।
गीयमानो नरैः स्त्रीभिश्चतुर्मासान् स जीवति ॥ १८६ ॥
लोहदण्डधरं भीमं पुरुषं कृष्णपिङ्गलम् ।
यः स्वप्ने पश्यति क्रुद्धं त्रिभिर्मासैः स गच्छति ॥ १८७ ॥
यः पश्येत् सागरं शुष्कं (शुक्लां?) गङ्गामपि सरस्वतीम् ।
जलस्थानानि चान्यानि द्वौ मासौ तस्य जीवितम् ॥
यः स्वप्ने पतितं वृक्षात् प्रासादात् पर्वतादपि ।
अन्धकूपेऽथवा जाले मासमेकं स जीवति ॥ १८९ ॥
तैलं पिबति यः स्वप्ने पश्येत् तैलमयं सरः ।
तैलाभ्यक्तशरीरस्तु पक्षमेकं स जीवति ॥ १९० ॥
भस्माद्यस्थिभिरङ्गारैराकीर्णां सर्पसङ्कुलाम् ।
नदीं पश्यति यः स्वप्ने दशरात्रं स जीवति ॥ १९१ ॥
यः शपेत पिशाचेन गुह्यकेनापि ताडितः ।
प्रत्यक्षमथवा स्वप्ने दशरात्रं स जीवति ॥ १९२ ॥
गर्ते चापूरिते वह्नौ प्रवि(ष्टे? ष्टो) वा जले गतः ।
न निर्गच्छति यः स्वप्ने स जीवति दिनत्रयम् ॥ १९३ ॥
यस्तु मग्नं महापङ्के निरुच्छ्वासं निराश्रयम् ।
आत्मानं पश्यति स्वप्ने दिनमेकं स जीवति ॥ १९४ ॥

---

१. 'स स्वप्ने लोहपी' ग. पाठः. २. 'कृष्णं शुक्लां गङ्गां स' ख. पाठः.

विज्ञाय निश्चितं कालं लक्षणैरेवमादिभिः ।
न भूयो म्रियते येन विद्वान् कर्म समाचरेत् ॥ १९५ ॥
तीर्थस्नानेन दानेन तपसा सुहुतेन वा ।
जपेन ध्यानयोगेन जायते कालवञ्चनम् ॥ १९६ ॥
जप्त्वा मृत्युञ्जयं यस्तु जुहुयादयुतत्रयम् ।
तिलैराज्यप्लुतैर्योऽपि स कुर्यात् कालवञ्चनम् ॥ १९७ ॥
एकारान्तमिदं सबिन्दु कथितं साद्यं सषष्ठस्वरं
बीजं बिन्दुविभूषितं च अपरं प्रोक्तं विसर्गान्वितम् ।
मध्ये नामपदं निधाय विधिना सव्यापसव्यं जपे-
न्मन्त्रं योऽक्षरलक्षसङ्ख्यविधिना मृत्युं जयत्येव सः
[॥ १९८ ॥

इति शतगुणाचार्यतनयश्रीविश्व(रूप)देवविरचिते
विवेकमार्तण्डे कालविज्ञानं नाम
चतुर्थः प्रबोधः ॥

अथ पञ्चमः प्रबोधः ।

एतद् विमुक्तिसोपानमेतत् कालस्य वञ्चनम् ।
यद् व्यावृत्तं मनो भोगादासक्तं परमात्मनि ॥ १ ॥
वपुरुत्पद्यते लोके वपुरेव प्रलीयते ।
न कश्चिज्जायते ह्यात्मा विरजो हि परो ध्रुवः ॥ २ ॥
आत्माकाशमयस्तावच्चित्तं प्राणमयं भवेत् ।
तेजोमयस्त्वहङ्कारस्तथा रसमयं मनः ॥ ३ ॥

---

१. 'ध्यात्', २. 'वदाच' ग. पाठः.

पृथ्वीमयं शरीरं स्यादिन्द्रियाणि च तन्मयम् ।
तथेन्द्रियमयो लोको व्यापारः कर्म तन्मयम् ॥ ४ ॥
तत्कर्म कविभिः प्रोक्तं पुण्यं पापमिति द्विधा ।
पुण्यपापमयो बन्धो देहिनां दुरतिक्रमः ॥ ५ ॥
कर्मबन्धमयी सृष्टिः संहारश्चैव तन्मयः ।
सम्भूतिं च विनाशं च यो जानाति स वेदवित् ॥ ६ ॥
सर्वेषामादिराकाशं निश्चलं शब्दलक्षणम् ।
जायते वायुराकाशाच्चश्चलस्पर्शलक्षणः ॥ ७ ॥
नभस्समीरणाभ्यां स्यात् तत् तेजो रूपलक्षणम् ।
एवमादित्रयादापः सम्भूता रसलक्षणाः ॥ ८ ॥
नभोवाताग्निवारिभ्यो मेदिनी गन्धलक्षणा ।
आधारः सर्वभूतानां प्राप्ता विश्वम्भरा ततः ॥ ९ ॥
पञ्चानामपि तत्त्वानामेकैकश्च निजो गुणः ।
अत्रैकद्वित्रिचत्वारो दृश्यन्ते योनिजा गुणाः ॥ १० ॥
मरुतो योनिराकाशं वह्नेरेतद् द्वयं भवेत् ।
एतत्त्रयमपां प्रोक्तं क्षितेरेतच्चतुष्टयम् ॥ ११ ॥
एवमेकगुणं व्योम द्विगुणो वायुरुच्यते ।
तथैव त्रिगुणं तेजो भवन्त्यापश्चतुर्गुणाः ॥ १२ ॥
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
एतत्पञ्चगुणा पृथ्वी ब्रह्मणा(तिष्ठ? धिष्ठि)ता पुरा ॥
क्षितौ ब्रह्मा जले विष्णुस्तथा रुद्रो हुताशने ।
ईश्वरः पवने देवो व्योम्नि देवः सदाशिवः ॥ १४ ॥

तावदाकाशसङ्कल्पो यावच्छब्दः प्रवर्तते ।
निश्शब्दं तत् परब्रह्म परमात्मा स गीयते ॥ १५ ॥
पृथ्वी शीर्णा जले मग्ना जलं ग्रस्तं महाग्निना ।
वायुना शमितं तेजो व्योम्नि वातो लयं ययौ ॥ १६ ॥
आकाशात् सर्वमुत्पन्नं जगदेतच्चराचरम् ।
लीयते पुनराकाशे तस्मादाकाशमाश्रयेत् ॥ १७ ॥
बहिरन्तःस्थितं शुद्धं निरालम्बं निरामयम् ।
भावयन्मनसा व्योम मुच्यते जन्मबन्धनात् ॥ १८ ॥
परमानन्दसंस्पर्शकारणं विश्वधारणम् ।
भावयन् जगतः प्राणं वायुवत् खेचरो भवेत् ॥ १९ ॥
अनलार्कशताकारं प्रज्वलद् भुवनत्रयम् ।
धारयन् हृदये तेजो वह्निना न स दह्यते ॥ २० ॥
पीयूषाकुलकल्लोलमालाप्लावितभूतलम् ।
हृदये भावयेत् तावत् तस्य वारिभयं कुतः ॥ २१ ॥
अभूतल(?)भराक्रान्तभूतलं भूतसङ्कुलम् ।
हृदये भावयेन्नित्यं तस्य नो पार्थिवं भयम् ॥ २२ ॥
नित्यमभ्याससंयुक्तो हृदये विनिभावयेत् ।
स तन्मयत्वमाप्नोति (काष्ठ? कोश)कारीव कीटकः ॥
धेनुः पृथ्वी जलं क्षीरं तेजो दधि समीरणः ।
नवनीतं घृतं व्योम क्रमादेवं विभेदयेत् ॥ २४ ॥
हृदि कामाः समुत्पन्नाः स्वीयजीवेन कल्पिताः ।
पुनस्त एव बाधन्ते विज्ञानं तत्र भेषजम् ॥ २५ ॥

ऊर्ध्वं नाभेरधः कण्ठाद् वितस्तिर्यत्र पूर्यते ।
तत्रास्ति पङ्कजं दिव्यं दिव्यलिङ्गविभूषितम् ॥ २६ ॥
कन्दमध्यात् समुद्भूतं चतुरङ्गुलमुत्तरम् ।
द्वादशाङ्गुलनालं तु हृत्पद्मं योगिनो विदुः ॥ २७ ॥
अष्टपत्रमधोवक्त्रं कदलीकुसुमोपमम् ।
हृत्पद्मं जीवसंयुक्तं यो जानाति स योगवित् ॥ २८ ॥
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथा मतिः ।
धीरहङ्कार इत्यष्टौ तत्र सन्ति महामलाः ॥ २९ ॥
उत्पत्तिर्निधनं निद्रा चिन्ता लज्जा क्षुधा तृषा ।
विस्मयो व्याधिरुद्वेगो दश दोषा हृदि स्थिताः ॥ ३० ॥
दाहः शोषो रतिः स्वेदः कोपः शोको दया भ्रमः ।
अष्टौ दोषा भवन्त्यन्ये हृत्पद्मे जीवसङ्गिनः ॥ ३१ ॥
अष्टादश महादोषा हृत्पद्मे सन्ति देहिनाम् ।
एभिर्विवर्जितो यस्तु स एव भुवि देवताः ॥ ३२ ॥
शृङ्गारः करुणो हास्यो रौद्रवीरभयानकाः ।
बीभत्सो(ष्टम ? ऽद्भुत)नामाष्टौ हृत्पद्मे भावजा रसाः ॥
क्षमा प्रज्ञा स्पृहा श्रद्धा दया दम्भो मदो धृतिः ।
दैन्यं शुभादयो भावाः सन्ति पद्मदलाष्टके ॥ ३४ ॥
जाड्यमौत्सुक्यमौद्धत्यमुत्साहो मत्सरो मदः ।
निन्दास्पर्धादयो भावा हृदि तिष्ठन्ति देहिनाम् ॥ ३५ ॥
निर्वेदो ग्लानिरालस्यं शौर्यं स्नेहो विरागता ।
हिंसामूर्छादयो भावा ज्ञेया हृत्कमले स्थिताः ॥ ३६ ॥

विश्वासो विस्मृतिः क्षोभो गर्वो विद्या विचारणा ।
कार्कश्यं मार्दवं चैते भावा हृदि शरीरिणाम् ॥ ३७ ॥

अष्टौ च स्थायिनो भावा बहुधा व्यभिचारिणः ।
सात्त्विको राजसो रौद्रो हृत्पद्मे सन्ति देहिनाम् ॥ ३८ ॥

ज्ञानं वैराग्यमैश्वर्यं धर्मो दिग्देवताष्टकम् ।
सुखदुःखादिकं सर्वं हृत्पद्मे योगिनो विदुः ॥ ३९ ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ४० ॥

अभिमानस्त्वहङ्कारो ह्यभिला(म ? षो)ऽभिमानिता ।
मोहादयो विलीयन्ते तदा मोक्षमवाप्नुयात् ॥ ४१ ॥

यदा सर्वे विलीयन्ते कामा ये च हृदि स्थिताः ।
अथ मर्त्योऽमृतं भावमत्येति स्मृतिनिश्चयम् ॥ ४२ ॥

ज्ञानादेव विलीयन्ते कामा ये च हृदि स्थिताः ।
अभावे सर्वकामानां स्वयं तत्त्वं प्रकाशते ॥ ४३ ॥

तच्च योगात्मकं ज्ञानं येन तत्त्वं प्रकाशते ।
स षडङ्गयुतो योगो यतो विज्ञानसम्भवः ॥ ४४ ॥

बद्धासनो नित्यमवक्रकायो
यो मानसं प्राणसमं नियम्य ।
उद्बुद्धहृत्पङ्कजकर्णिकायां
ध्यायत्ययं विश्वमयं स मुक्तः ॥ ४५ ॥

इति शतगुणाचार्यतनयश्रीविश्व(रूप)देवविरचिते
विवेकमार्तण्डे पञ्चमः प्रबोधः ॥

अथ षष्ठः प्रबोधः ।

द्विजसेवितशाखस्य श्रुतिकल्पतरोः फलम् ।
शमनं भवतापस्य योगं भजत सत्तमाः[1]! ॥ १ ॥

एतन्मुक्तेश्च सोपानमेतत् कालस्य वञ्चनम् ।
यन्निवृत्तं मनो भोगादासक्तं परमात्मनि ॥ २ ॥

षट्चक्रं षोडशाधारं त्रिलक्षं व्योमपञ्चकम् ।
स्वदेहे ये न जानन्ति कथं सिध्यन्ति योगिनः ॥ ३ ॥

एकस्तम्भं नवद्वारं त्रिशून्यं पञ्च देवताः ।
स्वदेहे ये न जानन्ति कथं सिध्यन्ति योगिनः ॥ ४ ॥

आसनं प्राणसंरोधः प्रत्याहारोऽथ धारणा ।
ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ॥ ५ ॥

आसनानि च ता[2]वन्ति याव[3]न्तो जीव[4]जन्तवः ।
एते[5]षां लक्षणं भेदं विजानाति महेश्वरः ॥ ६ ॥

चतुराशीतिलक्षाणामे[6]कमेकमु[7]दाहृतम् ।
ततः शिवेन पीठानां षोडशोनं शतं कृतम् ॥ ७ ॥

आसनेभ्यः समस्तेभ्यो द्वय[8]मेव विशिष्यते ।
एकं सिद्धासनं [9]प्रोक्तं द्वितीयं कमलासनम् ॥ ८ ॥

---

१. 'माः ॥ आस', २. 'या', ३. 'न्तो', ४. 'जातयः ।', ५. 'षामतुलान् भेदान् वि', ६. 'कैकं समु', ७. 'शानां श', ८. 'मेतदुदाहृतम् ।', ९. 'तावद् द्वि' ख. पाठः.

योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसे-
न्मेढ्रे पाद[1]मथैकमेकहृदयो धृत्वा[2] समं विग्रहम् ।
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्येद्[3] भ्रुवोरन्तरं
चैतन्मोक्षकवाटभेदजनकं सिद्धासनं प्रोच्यते ॥ ९ ॥

वामोरूपरि दक्षिणं च चरणं [4]विन्यस्य वामं तथा
याम्योरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढं[5]म् ।
अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकये-
दन्तर्व्याधिविका[6]रहारि यमिनां पद्मासनं प्रोच्यते ॥[7]

आधारं प्रथमं चक्रं स्वाधिष्ठानं द्वितीयकम् ।
योनिस्थानं तयोर्मध्ये कामरूपं निगद्यते ॥ ११ ॥

आधाराख्ये गुदस्थाने पङ्कजं यच्चतुर्दलम् ।
तन्मध्ये प्रोच्यते योनिः कामाख्या सिद्धवन्दिता ॥ १२ ॥

योनिमध्ये [8]महालिङ्गं पश्चिमाभिमुखं स्थितम् ।
मस्तके मणिवद् भिन्नं यो जानाति स योगवित् ॥ १३ ॥

तप्तचामीकराभा[9]सं तडिल्लेखेव विस्फुरत् ।
[10]चतुरश्रपुटं वह्नेरधो मेढ्रात् प्रतिष्ठितम् ॥ १४ ॥

[11]स्वशब्देन भवेत् प्राणो[12] ह्यधिष्ठानं[13] तदाश्रयः ।
स्वाधिष्ठानाख्यया तस्मान्मेढ्रमेवाभिधीयते ॥ १५ ॥

---

१. 'र्णि', २. 'त्या', ३. 'श्यन् भ्रु', ४. 'संस्थाप्य वा', ५. 'ढौ', ६. 'घातहा', ७. 'चन्द्रिका ॥', ८. 'स्थितं लि', ९. 'कारं त' ख. पाठः. १०. 'त्रिकोणं तत्पुरं बाह्यो(?)रधो मेढ्रप्रदेशतः ।' क. पाठः. ११. 'स' ख. पाठः. १२. 'णः स्वाधि', १३. 'नमिति स्मृतम् ।' क. पाठः.

स्वाधिष्ठाना[1]मिदं चक्रं मेढ्रमेव निगद्यते ।
[2]तन्तुना मणिवत् प्रोतं पूर्यते यत्र वायुना ॥ १६ ॥

तन्नाभिमण्डले चक्रं प्रोच्यते मणिपूरकम् ।
द्वादशारे महाचक्रे पुण्यपाप[3]विवर्जिते ॥ १७ ॥

तावज्जीवो भ्रमत्येव यावत्तत्त्वं न विन्दति ।
ऊर्ध्वं मेढ्रादधो नाभेः कन्दो योऽस्ति खगाण्डवत् ॥ १८ ॥

तत्र नाड्यः समुत्पन्नाः सहस्राणि द्विसप्ततिः ।
तेषु नाडीसहस्रेषु द्विसप्ततिरुदाहृताः ॥ १९ ॥

प्रधानाः प्राणवाहिन्यो भूयस्तत्र दश स्मृताः ।
इडा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥ २० ॥

गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ।
अलम्बुसा कुहूश्चैव शङ्खिनी च दश स्मृताः ॥ २१ ॥

एवं नाडीमयं चक्रं [4]ज्ञातव्यं योगिभिः सदा ।
सततं प्राणवाहिन्यश्चन्द्रसूर्याग्निदेवताः ॥ २२ ॥

इडा पिङ्गला सुषुम्ना तिस्रो नाड्य उदीरिताः ।
इडा वामे स्थिता भागे पिङ्गला दक्षिणे स्थिता ॥ २३ ॥

सुषुम्ना [5]मध्यदेशे तु प्राणमार्गास्त्रयः स्मृताः ।
प्राणोऽपानः समानश्चोदानो व्यानस्तथैव च ॥ २४ ॥

१. 'मतश्चक्रे मे'. २. 'मणिवत् तन्तुना यत्र वायुना पूर्यते वपुः ॥', ३. 'नियन्त्रिते', ४. 'विज्ञेयं यो', ५. 'तत्र [illegible]' ख. पाठः.

नागः कूर्मो[1]ऽथ कृकलो देवदत्तो धनञ्जयः[2] ।
हृदि प्राणो वसेन्नित्यमपानो गुदमण्डले ॥ २५ ॥

समानो नाभिदेशे तु उदानः कण्ठमध्यतः ।
व्यानो व्याप्तः शरीरे तु प्रधानाः पञ्च वायवः ॥ २६ ॥

प्राणाद्याः पञ्च विख्याता[3] नागाद्याः पञ्च वायवः[4] ।
नागो गृह्णाति चैतन्यं कूर्मस्तून्मीलने स्थितः ॥ २७ ॥

क्षुधं करोति कृकलो देवदत्तो विजृम्भणम् ।
मृते धनञ्जयः शब्दं क्षणमात्रं न विश्रमेत् ॥ २८ ॥

एवं[5] नाडीसहस्रेषु वर्तन्ते जीवरूपिणः ।
प्राणापानवशाज्जीवो ह्यधश्चोर्ध्वं प्रधावति ॥ २९ ॥

वामदक्षिणमार्गेण चञ्चलत्वान्न दृश्यते ।
आक्षिप्तो भुवि दण्डेन यथोच्चलाति कन्दुकः ॥ ३० ॥

प्राणापानसमाक्षिप्तस्तद्वज्जीवो न विश्रमेत् ।
रज्ज्वा[6] बद्धो यथा श्येनो गतोऽप्याकृ[7]ष्यते पुनः ॥ ३१ ॥

गुणबद्धस्तथा जीवः प्राणापानेन कृष्यते ।
[8]प्राणेनाकृष्यतेऽपानः प्राणोऽपानेन कृष्यते ॥ ३२ ॥

ऊर्ध्वं चाधः स्थितावेतौ यो जानाति स योगवित् ।
हकारेण बहिर्याति सकारेण विशे[9]त् पुनः ॥ ३३ ॥

---

१. 'र्मः कृकरसो दे', २. 'यः प्राणा', ३. 'ज्ञेया ना', ४. 'वः । एवं', ५. 'ते', ६. 'ज्जु', ७. 'क्षिप्यते', ८. 'अपानः कर्षति प्राणं प्राणोऽपानं च कर्षति ॥ खगौ रज्जुवदित्येतौ', ९. 'शत्यधः ॥' ख. पाठः.

हंसहंसेत्यतो[1] मन्त्रं जीवो जपति सर्वदा ।
[2]षट्छतान्यप्यहोरात्रं सहस्राण्येकविंशतिः ॥ ३४ ॥
एतत्सङ्ख्यान्वितं मन्त्रं जीवो जपति [3]सर्वदा ।
अजपा नाम गायत्री योगिनां मोक्षदायिका ॥ ३५ ॥
अस्याः सङ्कल्पमात्रेण नरः पापैः प्रमुच्यते ।
अनया सदृशी विद्या त्वनया सदृशो जपः ॥ ३६ ॥
अनया सदृशं पुण्यं न भूतं न भविष्यति ।
कुण्डलिन्यां समुत्पन्ना गायत्री प्राणधारिणी ॥ ३७ ॥
प्रणवाद्यां तथा विद्यां यस्तां वेद[6] स वेदवित्[7] ।
कन्दोर्ध्वं कुण्डलीशक्तिरष्टधा कुटिलीकृता ॥ ३८ ॥
ब्रह्मद्वारमुखं नित्यं मुखेनावृत्य तिष्ठति ।
येन मार्गेण गन्तव्यं ब्रह्मस्थानं निरामयम् ॥ ३९ ॥
मुखेनाच्छाद्य[8] तद्द्वारं प्रसुप्ता परमेश्वरी[9] ।
विष्फुरद्भुजगाकारा पद्मतन्तुनिभा शुभा ॥ ४० ॥
प्रतप्ता वायुना सार्धं प्रबोधं याति साग्निना ।
प्रबुद्धा वह्नियोगेन मनसा मरुता सह ॥ ४१ ॥
सूचीवं गुणमादाय व्रजत्यूर्ध्वं सुषुम्नया ।
उद्घाटयेत् कवाटं तु यथा[11] कुञ्चिकया हठात् ॥ ४२ ॥

१, 'मुं', २. 'शतानि षड् दिवा रात्रौ स', ३. 'सदा ॥', ४. 'ह्य', ५. 'चा', ६. 'त्ति', ७ 'योगवि', ८. 'र', ९. री । प्रबु', १०. 'मुखं समा', ११. 'या' ख. पाठः

कुण्डलिन्या तथा योगी मोक्षद्वारं [१]प्रभेदयेत् ।

कृत्वा सङ्कुटितौ करौ दृढतरं बद्ध्वा [२]च पद्मासनं
गाढं वक्षसि सन्निधाय चिबुकं ध्यायंश्च तच्चेतसि ।
वारं वारमपानमूर्ध्वमनिलं प्रोच्चालयन् पूरितं
[३]प्राणं मुञ्चति बोधमेति शनैके(श्चु ? श्श)क्तिप्रबो-
[धान्नरः ॥ ४३ ॥

अङ्गानां मर्दनं कुर्यात् स्वेदवारिनिवारणम् ॥ ४४ ॥

अङ्गानां मर्दनं कृत्वा श्रमसञ्जातवारिणा ।
कट्वम्ललवणत्यागी क्षीरभोजनमाचरेत् ॥ ४५ ॥

ब्रह्मचारी मिताहारी योगी योगपरायणः ।
अब्दादूर्ध्वं भवेत् [४]सिद्धिर्नात्र कार्या विचारणा ॥ ४६ ॥

कन्दोर्ध्वं कुण्डलीश[५]क्तिरष्टधा कुटिलीकृता ।
बन्धनाय च मूढानां [६]योगिनां मोक्षदायिका ॥ ४७ ॥

महामुद्रां नभोमुद्रामो[७]ड्याणं च जलन्धरम् ।
मूलबन्धं च यो वेत्ति स योगी सिद्धि[८]र्भाग् भवेत् ॥ ४८ ॥

अपानप्राणयोरैक्यं क्षयो मूत्रपुरीषयोः ।
युवा भवति वृद्धोऽपि सततं मूलबन्धनात् ॥ ४९ ॥

पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद् गुदम् ।
अपानमूर्ध्वमाकृष्य मूलब[९]न्धो निगद्यते ॥ ५० ॥

---

१. 'वि', २. 'थ', ३. 'मुञ्चन् प्राणमुपैति बोधमखिलां शक्तिं प्रभावादतः ॥ अङ्गानां मर्दनं कु', ४. 'द्धो नात्र', ५. 'क्तिः सप्तामोक्षाय (?) योगिनाम् ।', ६. 'यस्तां वेत्ति स तत्त्ववित् ॥', ७. 'ड्डीयानां ज', ८. 'भाजनम् ॥', ९. 'न्धोऽयमुच्यते' ख. पाठः.

उड्याणं कुरुते यस्मादविश्रान्तमहाखगः ।
उड्यांणं च तदेव स्यात् तत्र बन्धो विधीयते ॥ ५१ ॥

उदरे पश्चिमे[2] भागे नाभेरूर्ध्वं[3] निगद्यते ।
उड्यांणोऽयं[4] महाबन्धो मृत्युमातङ्गकेसरी ॥ ५२ ॥

बध्नाति हि सिराजालं ह्यधोगामिनभोजलम् ।
ततो जालन्धरो बन्धः कण्ठ[5]दुःखौघनाशनः ॥ ५३ ॥

जालन्धरे कृते बन्धे कण्ठसङ्कोचलक्षणे ।
पीयूषं न पतत्यग्नौ नच वायुः प्रकुप्यति[6] ॥ ५४ ॥

कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ।
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ ५५ ॥

न रोगो[7] मरणं तन्द्रा न निद्रा न क्षुधा तृषा ।
नच मूर्छा भवेत् तस्य यो मुद्रां वेत्ति खेचरीम् ॥ ५६ ॥

पीड्यते नच[8] रोगेण नच लिप्येत कर्मणा[9] ।
बाध्यते नच[10] शोकेन यो मुद्रां वेत्ति खेचरीम् ॥ ५७ ॥

चित्तं चर[11](य?)ति खे यस्माज्जिह्वा चरति[12] खे गता ।
तेनैषा खेचरी[13] मुद्रा सर्वसिद्धैर्नमस्कृता[14] ॥ ५८ ॥

---

१. 'ड्डीयाणं त', २. 'मं तानं ना', ३. 'च कारयत् ।', ४. 'ड्डीयाणो ह्यसौ ब', ५. 'ण्ठे', ६. 'धावति', ७. 'न जरा तस्य न', ८. 'स', ९. 'ब', १०. 'स कालेन यस्य मुद्रास्ति खेचरी ॥' ख पाठः. ११. १२. 'ल' क. पाठः. १३. 'री नाम मुद्रा सि', १४. 'ता ॥ खे' ख. पाठः.

गुदमूलं शरीराणां शिरस्तत्र प्रतिष्ठितम् ।
प्लावयन्तं (?) शरीराणामापादतलमस्तकम् ॥ ५९ ॥

खेचरी[1]मुद्रितं येन विवरं लम्बि[2]कोर्ध्वतः ।
न तस्य क्षरते बिन्दुः कामिन्यालिङ्गितस्य च ॥ ६० ॥

यावद् बिन्दुः स्थितो[3] देहे तावन्मृत्युभयं कुतः ।
यावद् बद्धा नभोमुद्रा तावद् बिन्दु[4]र्न गच्छति ॥ ६१ ॥

चलितोऽपि यदा बिन्दुः सम्प्राप्तः[5] स हुताशनम् ।
व्रजत्यूर्ध्वं तदा[6] शक्त्या निबद्धो योनिमुद्रया ॥ ६२ ॥

स पुन[7]र्द्विविधो बिन्दुः[8] पाण्डुरो लोहितस्तथा ।
पाण्डुरं शुक्रमित्याहुर्लोहिताख्यो[9] महारजः ॥ ६३ ॥

[10]सिन्दूरद्रवसङ्काशं र[11]विस्थाने स्थितं रजः ।
शशिस्थाने स्थितो[12] बिन्दुस्तयोरैक्यं सुदुर्लभम् ॥ ६४ ॥

बिन्दुः शिवो रजः शक्तिरिन्दुर्बिन्दू रजो रविः ।
उभयोः सङ्गमादेव प्राप्यते[13] ह्यमृतं पदम् ॥ ६५ ॥

वायुना शक्तिचा[14]लेन प्रेरितं खे यदा रजः[15] ।
याति बिन्दोः सहैकत्वं भवेद् दिव्यवपुस्तदा ॥ ६६ ॥

---

१. 'र्या', २. 'म्बकोर्ध्वगम् । बिन्दुः क्षरति नो तस्य कामिन्याश्लेषित', ३. 'रो', ४. 'न्दुः क्व ग', ५. 'मोति हु', ६. 'गता श', ७. 'एवन्द्वि' ख. पाठः. ८. 'वहिः पा' क. पाठः. ९. 'ख्यं', १०. 'विद्रुमद्र', ११. 'योनिस्था', १२. 'वलेद् बि', १३. 'व्याप्यते परमं प' ख. पाठः. १४. 'पा' क. पाठः. १५. 'जः । बिन्दोरेकत्वमायाति वेदितव्यं व' ख. पाठः.

[1]शुक्लं चन्द्रेण संयुक्तं रजः सूर्येण संयुतम् ।
द्वयोः [2]समरसैकत्वं यो जानाति स योगवित् ॥ ६७ ॥

शोधनं [3]नाडिजालस्य [4]चालनं चन्द्रसूर्ययोः ।
रसनाशोषणं [5]चैव [6]महामुद्रां च योऽभ्यसेत् ॥ ६८ ॥

वक्षोन्यस्तहनुः प्रपीड्य तरसा योनिं च वामाङ्घ्रिणा
हस्ताभ्यामनुधार[7]यँन् प्रचलितं पादं तथा दक्षिणम् ।
आपूर्य श्वसनेन कुक्षिकुहरं [8]बद्धासनो रेचयेत्
सर्वव्याधिविनाशिनी सुमतिभिर्मुद्रा नृणां प्रोच्यते
[॥ ६९ ॥

[9]सूर्याङ्गेन समभ्यस्य [10]चन्द्राङ्गेनाभ्यसेत् पुनः ।
यावत् तुल्या भवेत् सङ्ख्या ततो मुद्रां विसर्जयेत्
[॥ ७० ॥

नहि पथ्यमपथ्यं वा रसाः सर्वेऽपि नीरसाः ।
अपि भुक्तं विषं घोरं [11]पीयूषमिव जीर्यति ॥ ७१ ॥

क्षयकुष्ठगुदावर्तगुल्म[12]शूलज्वरव्यथाः ।
रोगाः सर्वे क्षयं यान्ति महामुद्रां [13]च योऽभ्यसेत् ॥ ७२ ॥

कथितेयं महामुद्रा महासिद्धिकरी नृणाम् ।
गोपनीया प्रयत्नेन न देया यस्यकस्यचित् ॥ ७३ ॥

---

१. 'क्ल', २. 'सीभावं यो', ३. 'मलज', ४. 'घट्टनं च', ५. 'सम्यङ्म', ६. 'द्रानिबन्धनात् ॥ वक्त्रे न्यस्तहनुं निपीड्य सुचिरं यो', ७. 'येत् प्रविततं', ८. 'दृध्वा शनै रेचयेदेषा पातकनाश(नी) ननु महामुद्रा नृणां प्राप्यते', ९. 'चन्द्रांशे तु स', १०. 'सूर्यांशे पुनरभ्यसेत ।', ११. 'मपि जी', १२. 'जीर्णपुरोगमाः । तस्य दोषाः क्ष', १३. 'तु' ख. पाठः.

पद्मासनं समारुह्य समकायशिरोधरः ।
नासाग्रदृष्टिरेकाकी जपेदोङ्कारमव्ययम् ॥ ७४ ॥

भूर्भुवः स्वरिमे लोकाश्चन्द्रसूर्याग्निदेवताः ।
त्रयो वेदाः[2] स्थिता यत्र तत् परं ज्योतिरोमिति ॥ ७५ ॥

इच्छा क्रिया तथा ज्ञानं ब्राह्मी रौद्री च वैष्णवी ।
त्रिधा शक्तिः स्थिता यत्र तत् परं ज्योतिरोमिति ॥ ७६ ॥

अकारश्च उकारश्च मकारो बिन्दुलक्षणः ।
त्रयो[3] वर्णाः स्थिता यत्र तत् परं ज्योतिरोमिति ॥ ७७ ॥

वचसा तज्जपेद्बीजं वपुषा तत् समभ्यसेत् ।
मनसा तत् स्मरेन्नित्यं यत् परंज्योतिरोमिति ॥ ७८ ॥

शुचिर्वाप्यशुचिर्वापि यो जपेत्[4] प्रणवं सदा ।
स लिप्यते न पापेन पद्मपत्रमिवाम्भसा ॥ ७९ ॥

चले वाते चलं सर्वं निश्चले निश्चलं तथा ।
योगी स्थाणुत्वमाप्नोति ततो वायुं निबन्धनात् ॥ ८० ॥

यावद्वायुः स्थितो देहे तावज्जीवो विमुच्यते ।
मरणं तस्य निष्क्रान्तौ ततो वायुं निरोधयेत्[5] ॥ ८१ ॥

यावद् बद्धो मरुद् देहे यावच्चित्तं निराश्रयम् ।
यावद् दृष्टिर्भ्रुवोर्मध्ये तावत् कालभयं कुतः ॥ ८२ ॥

अभूत् कालभयाद् ब्रह्मा प्राणायामपरायणः ।
योगिनो मुनयश्चैव ततो वायुं निरोधयेत् ॥ ८३ ॥

---

१. 'क्षरम्', २. 'वर्णाः स्थि', ३. 'त्रिधा मात्राः स्थि' ख. पाठः.
४. जपेदोङ्कारमव्ययम्' क. पाठः. ५. 'निबन्धयेत्' ख. पाठः.

षट्त्रिंशदङ्गुलो हंसः प्रयाणं कुरुते बहिः ।
वामदक्षिणमार्गेण ततः प्राणोऽभिधीयते ॥ ८४ ॥

शुद्धिमेति यदा सर्वं नाडीचक्रमनाकुलम् ।
तदैव जायते योगी क्षमः प्राणनिरोधने ॥ ८५ ॥

बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत् ।
धारयित्वा यथाशक्ति पुनः सूर्येण रेचयेत् ॥ ८६ ॥

अमृतोदधिमध्यस्थं गोक्षीरधवलप्रभम् ।
ध्यात्वा चन्द्रमसो बिम्बं प्राणायामे सुखी भवेत् ॥ ८७ ॥

प्राणं सूर्येण चाकृष्य पूरयित्वोदरं शनैः ।
विधिवत् कुम्भकं कृत्वा पुनश्चन्द्रेण रेचयेत् ॥ ८८ ॥

प्रज्वलज्ज्वलनज्वालापुञ्जमादित्यमण्डलम् ।
ध्यात्वा नाभिस्थितं योगी प्राणायामे सुखी भवेत् ॥ ८९ ॥

प्राणं चेदिडया पिबेन्नियमितं भूयोऽन्यया रेचयेत्
पीत्वा पिङ्गलया समीरणमलं बद्ध्वा त्यजेद् वामया ।
सूर्याचन्द्रमसोरनेन विधिना बिम्बद्वयं ध्यायतां
शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्ध्वतः
[॥ ९० ॥

यथेष्टं धारणं वायोरनलस्य प्रदीपनम् ।
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ॥ ९१ ॥

प्राणो देहे स्थितो वायुरनलस्य प्रदीपनः ।[1]
एकश्वासमयी मात्राप्युद्घाताय नियोजनः ॥ ९२ ॥

१. 'वायुरपानस्य निबन्धनः ।' ख. पाठः.

रेचकः पूरकश्चैव कुम्भकः [1]प्रणवात्मकः ।
प्राणायामो भवेत् त्रेधा मात्राद्वादशसंयुतः ॥ ९३ ॥

[2]मात्राद्वादशसंयुक्तौ दिवाकरनिशाकरौ ।
दोषजालं विनिघ्नन्तौ ज्ञातव्यौ योगिभिः सदा ॥ ९४ ॥

अधमे द्वादश प्रोक्ता द्विगुणा मध्यमे तथा ।
उत्तमे त्रिगुणा मात्रा प्राणायामस्य निर्णयः ॥ ९५ ॥

अधमे त्वेक उद्घातो द्वावुद्घातौ तु मध्यमे ।
उद्घातत्रितयं प्राहुः प्राणायामे तथोत्तमे ॥ ९६ ॥

अधमे च घनो घर्मः कम्पो भवति मध्यमे ।
उत्तिष्ठत्युत्तमे देहो बद्धपद्मासनो मुहुः ॥ ९७ ॥

बद्धपद्मासनो योगी नमस्कृत्वा गुरुं शिवम् ।
नासाग्रदृष्टिरेकान्ते प्राणायामं समभ्यसेत् ॥ ९८ ॥

ऊर्ध्वमाकृष्य चापानवायुं प्राणे[3]न योजयेत् ।
[4]अपाने नियते प्राणः सर्वपापैः प्रमुच्यते ॥ ९९ ॥

द्वाराणां नवकं निरुध्य पवनं पीत्वा दृढं धारितं
नीत्वाकाशमपानवह्निसहितं शक्त्या समुच्चालितम् ।
आत्मध्यानयुतः प्रणामविधिनावष्टभ्य मूर्ध्नां भुवं
यावत् तिष्ठति तावदायनगतं श्रेयःफलं विन्दति
[॥ १०० ॥

१. 'प्राणधारणा', २. 'प्राणायामस्वभावश्च मात्राद्वादशकान्वितः । निर्दहेन्मलजालानि बहिरन्तः शरीरिणाम् ॥', ३. 'नि', ४. 'मूर्धानमानयेत् तोयं स', ख. पाठः.

प्राणायामो भवेत्येष पातकेन्धनपावकः।
भवोदधिमहासेतुः प्रोच्यते[1] योगिभिः सदा ॥ १०१ ॥

आसनेन रुजं हन्ति प्राणायामेन पातकम्।
विकारं मानसं हन्ति प्रत्याहारेण योगवित् ॥ १०२ ॥

धारणाया मनोधैर्यं ध्यानादैश्वर्यमद्भुतम्।
समाधेर्मोक्षमाप्नोति त्यक्त्वा कर्म शुभाशुभम् ॥ १०३ ॥

प्राणायामद्विषट्केन[2] प्रत्याहारः स उच्यते।
प्रत्याहारद्विषट्केन जायते धारणा शुभा ॥ १०४ ॥

धारणा द्वादश प्रोक्तं ध्यानं ध्यानविशारदैः।
ध्यानद्वादशकेनैव समाधिरभिधीयते ॥ १०५ ॥

यत्समाधिफलं ज्योतिः सर्वगं विश्वतोमुखम्।
यस्मिन् दृष्टे क्रियायोगो यातायातान्निवर्त्तते ॥ १०६ ॥

सम्बध्यासनम[3]ङ्घ्रिमूलघटितं कर्णाक्षिनासापुट-
द्वाराण्यङ्गुलिभिर्नियम्य[4] पवनं वक्रेण चापूरितम्।
धृत्वा वक्षसि वह्निवायुसहितं मूर्ध्नि स्थितं[5] धारये-
देवं याति शिवेन तत्र समतां योगी चिरं जीवति[6]
[॥ १०७ ॥

गगनं पवने प्राप्ते ध्वनिरुत्पद्यते महान्।
घण्टानिनादगम्भीरः सिद्धिस्तस्य न दूरतः ॥ १०८ ॥

१. 'सेवितो यो', २. 'न जा', ३. 'नमेकबुद्धिरचलं क', ४. 'पीड्य प', ५. 'रं कार', ६. 'विनष्टामयः ॥' ख. पाठः.

प्राणायामेन युक्तेन सर्वरोगक्षयो भवेत् ।
अयुक्ताभ्यासयोगेन सर्वरोगसमुद्भवः ॥ १०९ ॥
हिक्का श्वासस्तथा कासः शिरःकर्णाक्षिवेदनाः ।
भवन्ति विविधा दोषाः पवनस्य व्यतिक्रमात् ॥ ११० ॥
यथा सिंहो गजो व्याघ्रो भवेद् वश्यः शनैश्शनैः ।
अन्यथा हन्ति योक्तारं तथा वायुरसेवितः ॥ १११ ॥
युक्तँ युक्तं त्यजेद् वायुं युक्तं युक्तं च पूरयेत् ।
युक्त युक्तं च बध्नीयादेवं शुद्धिमवाप्नुयात् ॥ ११२ ॥
चरतां चक्षुरादीनां विषयेषु यथाक्रमम् ।
यत् प्रत्याहरणं तेषां प्रत्याहारः स उच्यते ॥ ११३ ॥
यथा तृतीयकालस्थो रविः संहरते प्रभाम् ।
तृतीयाङ्गे स्थितो योगी विकारं मानसं तथा ॥ ११४ ॥
यं यं शृणोति कर्णाभ्यां प्रियं वा यदि वाप्रियम् ।
तं तमात्मेति विज्ञाय प्रत्याहरति योगवित् ॥ ११५ ॥
अभोज्यमथवा भोज्यं यं यं स्वादति जिह्वया ।
तं तमात्मेति विज्ञाय प्रत्याहरति योगवित् ॥ ११६ ॥
अगन्धमथवा गन्ध यं यं जिघ्रति नासया ।
तं तमात्मेति विज्ञाय प्रत्याहरति योगवित् ॥ ११७ ॥
अरम्यमथवा रम्यं यं यं पश्यति चक्षुषा ।
तं तमात्मेति विज्ञाय प्रत्याहरति योगवित् ॥ ११८ ॥
सुखं यत् स्पार्शनं दुःखं त्वचा संस्पृश्यते तु यत् ।
तं तमात्मेति विज्ञाय प्रत्याहरति योगवित् ॥ ११९ ॥

---

१. रंस्यति' ख. पाठः.

अङ्गमध्ये यथाङ्गानां कूर्मः सङ्कोचमाहरेत्।
योगी प्रत्याहरेदेवमिन्द्रियाणि तथात्मनि ॥ १२० ॥

चन्द्रामृतमयीं धारां प्रत्याहरति भास्करः।
तत् प्रत्याहरणं यत्तु प्रत्याहारः स उच्यते ॥ १२१ ॥

एका स्त्री भुज्यते द्वाभ्यामागता सोममण्डलात्।
तृतीयो यः पुनस्ताभ्यां स भवेदजरामरः ॥ १२२ ॥

नाभिमध्ये वसत्येष भास्करो दहनात्मकः।
अमृतात्मा स्थितो नित्यं तालुमध्ये तु चन्द्रमाः ॥ १२३ ॥

वर्षत्यधोमुखश्चन्द्रो ग्रसत्यूर्ध्वमुखो रविः।
ज्ञातव्यं कारणं तत्र येन पीयूषमाप्यते ॥ १२४ ॥

ऊर्ध्वं नाभिरधस्तालु ऊर्ध्वं भानुरधः शशी।
कारणं विपरीताख्यं गुरुवाक्येन लभ्यते ॥ १२५ ॥

त्रिधा बद्धो वृषो यत्र रोरवीति महास्वनः।
अनाहतं तु तच्चक्रं योगिनो हृदये विदुः ॥ १२६ ॥

अनाहतमतिक्रम्य चाकृष्टो मणिपूरकात्।
प्राप्तः प्राणो महापद्मं योगिनाममृतायते ॥ १२७ ॥

मूर्ध्नः षोडशपद्मपत्रगलितं प्राणादवाप्तं हठा-
दूर्ध्वास्यो रसनां नियम्य विवरे शक्तिं परां चिन्तयन्।

१. 'रामाहारयति भा', २. 'यन्तयोरत्र स', ३. 'ध्वैन'
४. 'रूर्ध्वनाभिर'. ५. 'र्ध्वं', ६. 'क्ष्य' ख. पाठः.

उत्कल्लोलजलामृतं सुविमलं जीवाकुलं यः पिबे-
न्निर्दोषः स मृणालकोमलवपुर्योगी चिरं जीवति ॥१२८॥

काकचञ्चुवदास्येन शीतलं सलिलं पिबेत् ।
प्राणापानविधानज्ञो योगी भवति निर्जरः ॥ १२९ ॥

रसनातालुमूलेन यः प्राणं सततं पिबेत् ।
अब्दार्धेन भवेत् तस्य सर्वरोगपरिक्षयः ॥ १३० ॥

विशुद्धे परमे चक्रे धृत्वा सोमकलामृतम् ।
तन्मार्गेण तु संयाति वञ्चयित्वा मुखं रवेः ॥ १३१ ॥
विशब्देन स्मृतो हंसस्तन्मध्यं शुद्धिरुच्यते ।
अतः कण्ठे विशुद्ध्याख्यं चक्रं चक्रविदो जगुः ॥ १३२ ॥

अमृतं कन्धरे धृत्वा नासान्तस्सुषिरे क्रमात् ।
स्वयमस्खलितं याति वञ्चयित्वा मुखं रवेः ॥ १३३ ॥

बद्ध्वा सोमकलाजलं सुविमलं कण्ठस्थलादूर्ध्वतो
नासान्तस्सुषिरेण याति गगनद्वारं ततः सर्वतः ।
ऊर्ध्वास्यो भुवि सन्निपत्य नितरामुत्तानगात्रः पिबे-
देवं यो विदधे जितेन्द्रियमना नैवास्ति तस्य क्षयः
[॥ १३४ ॥

ऊर्ध्वजिह्वस्ततो भूत्वा सोमपानं करोति यः ।
मासार्धेन न सन्देहो मृत्युं जयति योगवित् ॥ १३५ ॥

१. 'कुलं च वि', २. 'शीतलं', ३. 'गाः प्राणवि' ख. पाठः.
४. 'सो नैर्मल्यं शु' क. पाठः. ५. 'द्धं', ६. 'यतं तेनागतं प्लावयत्येवं',
७. 'स्थि' ख. पाठः.

संपीड्य रसनाग्रेण राजदन्तबिलं महत् ।
ध्यात्वामृतमयीं देवीं षण्मासेन कविर्भवेत् ॥ १३६ ॥

बद्धमूर्ध्वबिलं येन नव बद्धानि तेन हि ।
न मुञ्चत्यमृतं क्वापि स यथा पञ्चधारकम् ॥ १३७ ॥

बद्धमूर्ध्वबिलं येन तेन विघ्नं निवारितम् ।
अजरामरमाप्नोति यथा पञ्चमुखो हरः ॥ १३८ ॥

सर्वद्वाराणि बध्नाति यदूर्ध्वं तु बिलं ध्रुवम् ।
न मुञ्चत्यमृतं क्वापि सम्पन्नाः पञ्च धारणाः ॥ १३९ ॥

चुम्बन्ती यदि लम्बिकाग्रमनिशं जिह्वा रसस्यन्दिनी
 सक्षारा कटुकाथ दुग्धसदृशा मध्वाज्यतुल्याथवा ।
व्याधीनां हरणं जरान्तकरणं शास्त्रागमोद्गीरणं
 तस्य स्यादमरत्वमष्टगुणक सिद्धाङ्गनाकर्षणम् ॥

अमृतापूर्णदेहस्य योगिनो द्वित्रवत्सरात् ।
ऊर्ध्वं प्रवर्तते तस्य ह्यणिमादिगुणोदयः[1] ॥ १४१ ॥

नित्यं सोमकलापूर्णं शरीरं यस्य योगिनः ।
तक्षकेणापि दष्टस्य विषं तस्य न सर्पति ॥ १४२ ॥

इन्धनानि यथा वह्निस्तैलवर्तिं च दीपकः ।
तथा सोमकलापूर्णं देही देहं न मुञ्चति ॥ १४३ ॥

आसनेन समायुक्तः प्राणायामेन संयुतः ।
प्रत्याहारेण सम्पन्नो धारणां तु समभ्यसेत् ॥ १४४ ॥

हृदये पञ्चभूतानां धारणं च पृथक् पृथक् ।
मनसो निश्चलत्वेन धारणा साभिधीयते ॥ १४५ ॥

१. 'रेतो ब', २. 'यम् ॥' ख. पाठः.

या पृथ्वी हरितालहेमरुचिरा तत्त्वं लकारान्वितं
संयुक्ता कमलासनेन हि चतुष्कोणा हृदि स्थायिनी ।
प्राणं तत्र विनीय[1] पञ्च घटिकाश्चित्तान्वितं धारये-
देषा स्तम्भकरी सदा क्षितिजयो[2] कुर्यात्[3] ततो धार-
[णाम् ॥ १४६ ॥

अर्धेन्दुप्रतिमं च कुन्दधवलं कण्ठेऽम्बुतत्त्वं स्थितं
यत् पीयूषवकारबीजसहितं[4] युक्तं सदा विष्णुना ।
प्राणं तत्र विनीय पञ्च घटिकाश्चित्तान्वितं धारये-
देषा दुस्सहकालकूटजरिणी स्याद् वारुणी धारणा
[॥ १४७ ॥

तालौ[5] संस्थितमिन्द्रगोपसदृशं तत्त्वं त्रिकोणान्वितं[6]
तेजो रेफमयं[7] प्रवाळरुचिरं रुद्रेण तत्सङ्गतम्[8] ।
प्राणं तत्र विनीय पञ्च घटिकाश्चित्तान्वितं[9] धारये-
देषा वह्निजयं तथा विदधती वैश्वानरी धारणा
[॥ १४८ ॥

यद्भिन्नाञ्जनपुञ्जसन्निभमिदं वृत्तं भ्रुवोरन्तरे
तत्त्वं[10] सत्त्वमयं यकारसहितं यत्रेश्वरो देवता ।
प्राणं तत्र विनीय[11] पञ्च घटिका[12]श्चित्तान्वितं धारये-
देषा खे गमनं करोति यमिनां सा वायवी धारणा
[॥ १४९ ॥

१. निपीय', २. 'लं कु'; ३. 'द् भुवो धा', ४. 'हरितं' ५. यत्तालुस्थि', ६. 'णोज्ज्वलत्तेजो', ७. 'युतं प्र', ८. 'य', ९. 'कश्चिन्तान्वि', १०. 'क', ११. 'नियम्य प', १२. 'कश्चिन्तान्वि' ख. पाठः.

आकाशं शुचि शुद्धवारिसदृशं यद् ब्रह्मरन्ध्रे स्थितं
तन्नादेन सदाशिवेन सहितं शान्तं हकाराक्षरम् ।
प्राणं तत्र विनीय पञ्च घटिकाश्चित्तान्वितं धारये-
देषा मोक्षकवाटभेदनपटुः प्रोक्ता नभोधारणा [॥ १५० ॥

स्तम्भिनी द्राविणी चैव दाहिनी भ्रामिणी तथा ।
शोषिणी च भवन्त्येता भूतानां पञ्च धारणाः ॥ १५१ ॥

कर्मजा माधुरी सर्वधारणाः पञ्च दुर्लभाः ।
विज्ञाताः सततं येन सर्वपापैः प्रमुच्यते ॥ १५२ ॥

यस्मिन् यस्मिन् भवेदङ्गे व्यासेनामत्रसम्भवः(?) ।
तत्तदङ्गं धिया व्याप्य धार्यते तत्र धारणा ॥ १५३ ॥

आग्नेयीं धारणां ध्यायेद् रोगे वायव्यवारुणे ।
वायव्याग्नेयदोषे च विषदोषे च सर्वतः ॥ १५४ ॥

अमृतं चिन्तयेत् प्राज्ञः क्षुत्पिपासातुरस्तथा ।
अन्योन्याभिभवादेवं ज्ञात्वा युञ्जीत धारणाम् ॥ १५५ ॥

ध्यानेनैव प्रणश्यन्ति ये रोगा रागसम्भवाः ।
भेषजैर्जपहोमैश्च दानैरन्यैश्च कर्मजाः ॥ १५६ ॥

---

१. 'च मरीचिवा', २. 'थे' ख. पाठः. ३. 'युक्तं ह' क. पाठः. ४. 'न्वितम्', ५. 'णांस्तत्र नियम्य प', ६, 'कञ्चिन्तान्वि', ७. 'फलप्रदा च यमिनां प्रो', ८. 'शमनी च', ९. 'मेना + धराः स', १०. 'द, ११. 'योगी सर्वदुःखैः प्र' ख. पाठः. १२. 'ते ॥ यत्तत्त्वे निश्च' क. पाठः.

यथारण्यगजेन्द्रस्तु पुरुषै(ः सु ? स्त्व)प्रयोगतः ।
नाशयेद्धार्यमाणस्तु तथा वायुरबुद्धिभिः ॥ १५७ ॥
ध्येति सर्वत्र चिन्तायां धातुरेष हि पठ्यते ।
सर्वचिन्तासमायुक्तं योगिनो हृदि वर्तते ॥ १५८ ॥
यत्तत्त्वे निश्चलं चेतस्तद् ध्यानं च प्रचक्षते ।
धृत्यै सर्वत्र चिन्ताया धारणैषा हि दृश्यते ॥ १५९ ॥
यच्चित्ते निश्चला चिन्ता तत्तु ध्यानं प्रचक्षते ।
द्विधा भवति तद् ध्यानं सगुणं निर्गुणं तथा ॥ १६० ॥
सगुणं वर्णभेदेन निर्गुणं केवलं विदुः ।
अश्वमेधसहस्राणि वाजपेयशतानि च ॥ १६१ ॥
एकस्य ध्यानयोगस्य कलां नार्हन्ति षोडशीम् ।
अन्तश्चेतो बहिश्चक्षुरधिष्ठाय सुखासनम् ॥ १६२ ॥
समत्वं च शरीरस्य ध्यानमुद्रेति कीर्त्तिता ।
आधारं[1] प्रथमं[2] चक्रं तप्तकाञ्चनसन्निभम् ॥ १६३ ॥
नासाग्रे दृष्टिमादाय ध्यात्वा मुच्यति किल्बिषम् ।
स्वाधिष्ठानं द्वितीयं यत्तन्माणिक्यशिलोपमम् ॥ १६४ ॥
नासाग्रे[3] दृष्टिमादाय[4] ध्यात्वा मुच्यति किल्बिषम् ।
तरुणादित्यसङ्काशं चक्रं[5] च मणिपूरकम्[6] ॥ १६५ ॥
नासाग्रे दृष्टिमादाय[7] ध्यात्वा संक्षोभयेज्जगत् ।
हृदाकाशस्थितं चक्रं प्रसन्नरवितेजसम् ॥ १६६ ॥

---

१. 'रे', २. 'मे चक्रे द्रुतका', ३. 'ग्र', ४. 'रात्मानं ध्यात्वा योगी सुखी भवेत्', ५. 'क्रे च म', ६. 'के ॥', ७. 'रात्मानं ज्ञात्वा', ८. 'त् । विद्यु' ख. पाठः.

नासाग्रे दृष्टिमादाय ध्यात्वा ब्रह्मनयो भवेत् ।
विद्युत्प्रभं च हृत्पद्मे प्राणाया[१]मेन चेतसा ॥ १६७ ॥

नासा[२]ग्रे दृष्टि[३]मादाय ध्यात्वा ब्रह्ममयो भवेत् ।
सततं कर्णिकामध्ये विशुद्धं चक्रमुच्यते ॥ १६८ ॥

नासा[५]ग्रे दृष्टि[६]मादाय ध्यात्वा दुःखात् प्रमुच्यते ।
स्रवत्पीयूषसम्पूर्णं लम्बि[७]के चन्द्रमण्डलम् ॥ १६९ ॥

नासा[८]ग्रे दृष्टि[९]मादाय ध्यात्वा मृत्युं प्रमुञ्चति ।
भ्रुवोर्मध्यस्थितं देवं शुद्धमौक्तिकसन्निभम् ॥ १७० ॥

नासाग्रे दृष्टिमादाय ध्यात्वानन्दमयो भवेत् ।
[१०]ध्यानेन लक्षयेन्नित्यं भ्रूमध्ये परमेश्वरम ॥ १७१ ॥

आत्मानं विजितप्राणो योगी योगमवाप्नुयात् ।
निर्गुणं च शिवं शान्तं गगने [११]सर्वतोमुखम् ॥ १७२ ॥

भ्रूमध्ये दृष्टि[१२]मादाय ध्यात्वा ब्रह्ममयो भवे[१३]त् ।
आकाशं यत् परं स्थानं यत्राज्ञाचक्रमुच्यते ॥ १७३ ॥

तत्रात्मानं शिवं ध्यात्वा योगी ज्ञानमयो भवेत् ।
निर्मलं गगनाकारं मरीचिजलसन्निभम् ॥ १७४ ॥

---

१. 'मैर्विभेदिते', २. 'ग्र', ३. 'रात्मानं ध्या', ४. 'दीपकप्रभम् ।', ५. 'ग्र', ६. 'रात्मानं ध्या', ७. 'का', ८. 'ग्र' ९. 'रात्मानं ध्यात्वानन्दमवाप्नुयात् ।', १०. 'नं नीलनिभं नित्यं', ११. 'विश्वतेजसम्' ख. पाठः. १२. 'रात्मानं ध्या', १३. 'त् । मि' क. पाठः.

आत्मानं सर्वगं ध्यात्वा योगी [1]योगमत्राप्नुयात् ।
गुदं मेढ्रश्च नाभिश्च हृदयं चक्रमूर्ध्वतः ॥ १७५ ॥

[2]कर्णिका लम्बिकस्थानं भ्रूमध्यं च नभोबिलम् ।
कथितानि नवैतानि ध्यानस्थानानि योगिनाम् ॥१७६॥

उपाधितत्त्वयुक्तानि कुर्वन्त्यष्टगुणोदयम् ।
उपाधिश्च तथा तत्त्वं द्वयमेतदुदाहृतम् ॥ १७७ ॥

उपाधिः प्रोच्यते वर्णस्तत्त्वमात्माभिधीयते ।
उपाधिरन्यथाज्ञानं तत्त्वसंस्थितिरन्यथा[3] ॥ १७८ ॥

यथान्यवर्णयोगेन दृश्यते स्फाटिको मणिः ।
समस्तोपाधिविध्वंसे सदाभ्यासेन योगिनाम् ॥ १७९ ॥

मुक्तापि शुक्तिभेदेन तद्वदात्मा प्रकाशते[4] ।
विरजाः पर आकाशादन्तरात्मा महानिति ॥ १८० ॥

विरजं परमाकाशं यद्यदक्षरमव्ययम् ।
स्तौति श्रुतिरहोरात्रं तत्त्वं तत्त्वविदो विदुः ॥ १८१ ॥

शब्दादीनां च तन्मात्रं यावत् कर्णादिषु स्थितम् ।
तावद्ध्यैवस्थितं ध्यानं समाधिः स्यादतः परम् ॥ १८२ ॥

धारणा पञ्चनाड्यस्तद्ध्यानं षट्कैव नाडिका ।
दिर्नद्वादशकेन स्यात् समाधिः प्राणसंयमः ॥ १८३ ॥

---

१. 'मुक्तिम', २. 'ण्ठि', ३. 'था ॥ सम' क. पाठः. ४. 'ते । विरज' क. पाठः. ५. 'त्कवयो वि', ६. 'वेव स्मृतं' ख. पाठः. ७. 'नं तत्समाधिः परं नयः ।', ८. 'नानां द्वादशेनैव क. पाठः ९. 'मात् ।' ख. पाठः.

अम्बुसैन्धवयोः साम्यं यथा भवति योगतः।
तथात्ममनसोरैक्यं समाधिः सोऽभिधीयते ॥ १८४ ॥
यदा संक्षीयते प्राणो मानसं च विलीयते।[2]
तदा समरसैकत्वं समाधिः सोऽभिधीयते ॥ १८५ ॥
यत्समत्वं तयोरत्र जीवात्मपरमात्मनोः।
समस्तनष्टसङ्कल्पः समाधिः सोऽभिधीयते ॥ १८६ ॥
न्द्रियाणि मनोवृत्तिरपराक्षेपया हि सा।
द्वयत्वं गते जीवे न मनो नेन्द्रियाणि च ॥ १८७ ॥
। गन्धं न रसं रूपं नच स्पर्शं नच स्वनम्।
आत्मानं च परं वेद योगी युक्तः समाधिना ॥१८८॥
नहि जानाति शीतोष्णं न दुःखं न सुखं तथा।
मानन्नं नावमानं च योगी युक्तः समाधिना ॥ १८९ ॥
खाद्यते नच कालेन बाध्यते नच कर्मणा।
साध्यते नच केनापि योगी युक्तः समाधिना ॥ १९० ॥
अभेद्यः सर्वशस्त्राणामवध्यः सर्वदेहिनाम्।
अग्राह्यो मन्त्रशास्त्राणां योगी युक्तः समाधिना॥ १९१॥
युक्ताहारविहारश्च युक्तचेष्टश्च कर्मसु।
युक्तस्वप्नावबोधश्च योगी तत्त्वं[11] च विन्दति ॥ १९२ ॥

---

१. 'सदा समरसत्वं यत् स' ख. पाठः. २. 'ते ॥ इन्द्रियेषु मनो' क. पाठः. ३. 'रत्रा पेक्षाद्वया', ४. 'नत्मानं न परं वेत्ति यो' ख. पाठः. ५. 'ना। खा', ६. 'धार्यते', ७. 'वाच्यः स'. ८. 'यन्त्राणां', ९. 'रश्च सर्वत्र यु', १०. 'क्तनिद्राप्रबो', ११. 'त्त्वं स वि' ख. पाठः.

निरातङ्कं निरालम्बं निष्प्रपञ्चं निराश्रयम् ।
निरामयं निराकारं तत्त्वं तत्त्वविदो विदुः ॥ १९३ ॥

निर्मलं निश्चलं नित्यं निर्गुणं निष्क्रियं महत् ।
व्योमे[1] विज्ञानमानन्दं ब्रह्म ब्रह्मविदो विदुः[2] ॥ १९४ ॥

निरातङ्के निरालम्बे निराभासे निरामये ।
योगी योगविधानेन परे ब्रह्मणि लीयते ॥ १९५ ॥

दुग्धे क्षीरं घृते सर्पिरग्नौ वह्निरिवार्पितः[3] ।
अद्वयत्वं व्रजेदेवं योगी लीनः परे पदे ॥ १९६ ॥

भवे[4]वनवह्निर्मुक्ति[5]सोपानमार्गः
प्रकटितपरमार्थो[6] ग्रन्थगुह्यं च गुह्यम् ।
सकृदपि पठतीमं यः शृणोति प्रबन्धं
स भवति भुवि भव्यो[7] भाजनं भुक्तिमुक्त्योः
[॥ १९७ ॥

इति शतगुणाचार्यतनयश्रीविश्वरूपदेवविरचिते विवेक-
मार्तण्डे योगसाधनं नाम षष्ठः प्रबोधः ॥

श्रीमत्पराशरकुले महति प्रसूतो
योऽयं कृती शतगुणो गुणिनां वरिष्ठः ।

१. 'म्नि ख. पाठः. २. 'दुः । दु' क. पाठः. ३. 'तम् तन्मयत्वं व्रजत्येवं' ४. 'वभयवनवह्नि', ५. 'क्त', ६. 'र्थज्ञानगु', ७. 'व्यं' ख. पाठः.

तस्यात्मजोऽकृत रजन्धिपुराधिवासो
    ग्रन्थं शुभाय भविनां भुवि विश्वरूपः ॥

कृतं मया चित्तविनोदनार्थं
    विमोक्षशास्त्रं च मुदे गुरूणाम् ।
विवेकसम्पत्तिकरं नराणां
    विवेकमार्ताण्डमतो वदन्ति ॥

अजानता यत् किल शास्त्रमार्गं
    ग्रन्थो मयाकारि नवप्रबोधः ।
विवेकभानुः स मतो नराणां
    क्षन्तव्य(मस्तात् ? मेतत् ) कविभिः समस्तम् ॥

आराध्य यन्मञ्जुपदारविन्दं
    भक्तिप्रभावाह्वयमेतदासीत् ।
एकं मया श्लाघ्ययशः कवीना-
    माधिस्तथान्या महती यतीनाम् ॥

प्रसरति हृदि तावद् घोरसर्पप्रभाव-
    प्रभवगरलजालं कालरेतद्धि पुंसाम् ।
श्रवणकुहरसंस्थः गर्भभूषा विरूपा
    न विशति कृतिरेषा विश्वरूपस्तु तावत(?) ॥

शुभं भूयात् ।

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | | Rs. | As. | P. |
|---|---|---|---|---|
| भक्तिमञ्जरी | **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः | **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

**Trivandrum Sanskrit Series.**

| | | Rs. | As. | P. |
|---|---|---|---|---|
| No. 1 | —दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2 | —अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3 | —नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4 | —शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5 | —व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6 | —दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7 | —ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8 | —प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancaratra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*second edition*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāṃsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारो-रुभङ्गानि **Madhyamavyayoga-Duta-vakya-Dutaghatotkaca-Karna-bhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः **Nanartharnavasam-ksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका **Kanadasiddhanta-candrika** (Nyāya) by Gaṅgādhara-sūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् **Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः **Nanartharnavasam-ksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः **Nanartharnavasam-ksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Śankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama. (*out of stock*). | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Sidhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् **Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Ṭīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Ṭîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhinyayavicara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikramavarman. (*out of stock*). | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayacandrika** (Śilpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No 59—नागानन्दम् **Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasangraha.** (*out of stock*). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhāravî with the commentary Sabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidāsa wîth the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No. 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Sankara (Part I, 1–6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikā of Śrī Kumāra | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra Part I, Sâmânyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—ईशानशिवगुरुदेवपद्धतिः **Isanasivaguru-devapaddhati** (Tantra) by Īśānaśiva-gurudevamiśra (Part II, Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः **Isvarapratipatti-prakasa** (Vedānta) by Madhusūdana-sarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya. (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् **Silparatna** (Śilpa) by Śrī-kumâra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimula-kalpa** (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः **Isanasivaguru-devapaddhati** (Tantra) by Iśānaśiva-gurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् **Asvalayanagrhya-sutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I, 1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् **Do.** Do. (Part II, 3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः **Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśva-rūpācārya (Part II. Prâyaścit-tâdhyâya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् **Arthasastra** of Kauṭalya with commentary by Mahāmahopā-dhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivaguru-devapaddhati** (Tantra) by Īśāna-śivagurudevamiśra (Part IV, Kriyā-pāda 31–64 Paṭalās and Yogapāda). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No 85—**विष्णुसंहिता Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—**भरतचरितम् Bharatacarita** (Kâvya) by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—**सङ्गीतसमयसारः Sangitasamayasara** (Sangīta) of Sangītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—**काव्यप्रकाशः Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacūdâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsās). | 3 | 0 | 0 |
| No. 89—**स्फोटसिद्धिः Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—**मीमांसाश्लोकवार्त्तिकम् Mimamsaslokavartika** with the commentary Kāśika of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—**होराशास्त्रम् Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—**रसोपनिषत् Rasopanisat.** | 2 | 0 | 0 |
| No. 93—**वेदान्तपरिभाषा Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśika of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—**बृहद्देशी Brihaddesi** (Sangīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—**रणदीपिका Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |
| No. 96—**ऋक्संहिता Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 97—नारदीयमनुसंहिता **Naradiyamanusamhita** (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—शिल्परत्नम् **Silparatna** (Śilpa) by Śrī-kumāra. (Part II.) | 2 | 8 | 0 |
| No. 99—मीमांसाश्लोकवार्त्तिकम् **Mimamsasloka-vartika** (Mīmāmsā) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhitya-cūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6—10 Ullāsās). | 5 | 0 | 0 |
| No. 101—आर्यभटीयम् **Aryabhatīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—दत्तिलम् **Dattila** (Saṅgīta) of Dattila-muni. | 0 | 4 | 0 |
| No. 103—हंससन्देशः **Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104—साम्बपञ्चाशिका **Sambapancasika** (Stuti) with commentary. | 1 | 0 | 0 |
| No. 105—निधिप्रदीपः **Nidhipradipa** of Siddha-śrikaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—प्रक्रियासर्वस्वम् **Prakriyasarvasva.** (Vyākaraṇa) of Śrī Nārāyaṇa Bhaṭṭa with commentary (Part I.) | 1 | 0 | 0 |
| No. 107—काव्यरत्नम् **Kavyaratna** (Kāvya) of Arhaddāsa | 0 | 12 | 0 |
| No. 108—बालमार्ताण्डविजयम् **Balamartanda-vijaya.** (Nāṭaka) of Devarājakavi. | 1 | 8 | |
| No. 109—न्यायसारः **Nyayasara** with the commentary of Vāsudevasūri. | 1 | 8 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 110—आर्यभटीयम् **Aryabhatiya** (Jyotiṣā) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan.(Part II. Kālakriyāpāda) | 1 | 0 | 0 |
| No. 111—हृदयप्रियः **Hridayapriya** (Vaidyaka) by Parameśvara, | 3 | 0 | 0 |
| No. 112—कुचेलोपाख्यानम् अजामिलोपाख्यानं च । **Kucelopakhyana and Ajamilopakhyana.** (Saṅgīta) by H. H. Svāti Śrī Rāma Varma Maharaja. | 0 | 4 | 0 |
| No. 113—सङ्गीतकृतयः **Sangitakrtis** (Gāna) of H. H. Svāti Śrī Rāma Varma Māharaja. | 1 | 0 | 0 |
| No. 114—साहित्यमीमांसा **Sahityamimamsa** (Alaṅkāra) | 1 | 0 | 0 |
| No. 115—ऋक्संहिता **Rksamhita** (with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya) (Part II) 2nd Adhyaya in Ist Aṣṭaka. | 1 | 8 | 0 |
| No. 116—वाक्यपदीयम् **Vakyapadīya** (Vyākaraṇa) with the commentary Prakīrṇakaprakāśa by Helaraja son of Bhutiraja. (Part I). | 1 | 8 | 0 |
| No. 117—सरस्वतीकण्ठाभरणम् **Sarasvatikantabharana** (Vyākarṇa) by Bhojadeva with the commentary of Śrī Nārāyaṇa Daṇḍanātha. | 1 | 8 | 0 |
| No. 118—बालरामभरतम् **Balaramabharata** (Nāṭya) by Bālarāma Varma Vanci Maharaja. | 2 | 8 | 0 |
| No. 119—विवेकमार्तण्डः **Vivekamarthanda** (Vedanta) of Viswarupadeva | 0 | 8 | 0 |

***Apply to:—***

*The Superintendent,*

*Government Press,*

*Trivandrum.*

IN MEMORY

OF

# G. A. NATESAN

(FOUNDER, G. A. NATESAN & CO. & INDIAN REVIEW)



BORN 24-8-1873 ] [ DIED 10-1-1949